॥ श्रीः ॥

# ॥ विष्णुपादादिकेशान्तस्तोत्रम् ॥

श्रीमच्छंकरभगवत्पादैर्विरचितम् ।

श्री पूर्णसरस्वत्या विरचितया
भक्तिमन्दाकिन्याख्यया
व्याख्यया समेतम् ॥

श्रीरङ्गम्
श्रीवाणीविलासमुद्रायन्त्रालयः ।
१९११.

# PREFACE.

VISHNUPADADIKESANTASTOTRA is, as its name implies, a stotra in praise of the God Vishnu from his foot to his head by that great philosopher and ardent devotee, Sri Sankara Bhagavatpadacharya. Though an incarnation of Siva, he was the famous world-wide expounder of the unique Advaita system of philosophy and his devotion knew no distinction of Siva and Vishnu. This gem of a stotra is a typical example of the broadmindedness and intense devotion of an intellectual giant. The commentary by Purna Sarasvati, given herein, is very rare and brings out beautifully well the meaning of the original. I got only one palm leaf manuscript of the commentary from the Travancore Government library through the kindness of H. H. Kerala Varma Raja, Valiyakoil Tampiran, and a perusal of it greatly tempted its publication.

My efforts to secure a second copy proved of no avail. Accordingly I have published this book on the strength of this single fairly accurate manuscript with the hope of improving it in a future edition, if in the meanwhile another copy is secured.

*T. K. Balasubrahmanyam.*

॥ श्रीः ॥

# विष्णुपादादि-केशान्तस्तोत्रम् ॥

जात्याख्यागुणकर्मवर्जिततया निर्णीतमप्यागमै-
र्जात्या यं पशुपालमाप्तवचसः कृष्णं गृणन्त्याख्यया ।
श्रीशं ज्ञानिनमीश्वरं सुयशसं वीरं विरक्तं गुणै-
स्त्रातारं जगतां च कर्मभिरहो देवाय तस्मै नमः ॥

श्रीमच्छंकरपूज्यपादरचितं पादादिकेशावधि
स्तोत्रं दातमघस्य नेत्रममलं गात्रं हरेः प्रेक्षितुम् ।
व्याचिख्यासति मय्यहो सति सतामेषा विधा हासितुं
व्यक्ता भक्तिरथापि विष्णुपदयोः पुष्णाति मे धृष्णुताम् ॥

तत्र तावत् 'आत्मा वा अरे द्रष्टव्यः' इति स्वविहितस्य आत्मदर्शनस्य साधनतया श्रुत्या 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति प्रतिपादितानां श्रवणमनननिदिध्यासनानां मध्ये

यमादिषडङ्गनिष्पाद्यस्य परमेश्वरैक्यानुभवसमाधिमातुः निदि-
ध्यासनस्य प्राधान्यम् 'तद्रूपप्रत्ययैकान्तसंततिश्चान्यनिःस्पृहा ।
तद्ध्यानप्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप । तस्यैव कल्पनाहीनं
स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यः समाधिः सोऽ-
भिधीयते' इति वचनात्, 'श्रेयो हि ज्ञानमभ्यासात् ज्ञाना-
द्ध्यानं विशिष्यते' इति भगवद्वचनात्, 'सर्वेषामेव यज्ञानां
ध्यानयज्ञः परः स्मृतः । बहिर्योगोपचारेण यः पूजयति शं-
करम् । ध्यानयज्ञेन सततं स याति परमां गतिम् । ज्ञानध्या-
नात्मकः सूक्ष्मः शिवयोगमहामखः । विशिष्टः सर्वयज्ञाना-
मसंख्यातैर्महागुणैः । जपेन पापसंशुद्धिर्ज्ञानध्यानेन मुच्यते'
इत्यादिवचनैः ज्ञानस्य कृतत्वात् तस्य च धारणामूलकत्वात्
तस्याश्च 'यथाग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा
चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्' इति प्रशस्तत्वात्
'तस्मात्समस्तशक्तीनामाधारे तत्र चेतसः । कुर्वीत संस्थितिं
सा तु विज्ञेया शुद्धधारणा । अन्ये तु पुरुषव्याघ्र चेतसो ये
व्यपाश्रयाः । अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः'
इत्यादिवचनात् कर्मयोगित्वेनाशुद्धान् देवादीनपास्य कर्मपा-
रतन्त्र्यरहिते भक्तानुग्रहाय कृतपरिग्रहे विशुद्धतत्त्वात्मके स-
मस्तशक्त्याधारे सर्वावतारबीजभूते घृतकाठिन्यवत् परब्रह्मणो
विष्ण्वाख्ये विवर्ते सच्चिदानन्दैकरसे सकलमङ्गलप्रसोतरि

समग्रदुरितकुलजालप्लोषजातवेदसि तापत्रयतरणिकिरणतप्तसं-
सरणमरुधरणिसरणिसंचरणविधुरजनपरिश्रमहरणसुरविटपिनि
विग्रहरत्ने मनःस्थिरीकरणात्मकत्वात् मनसश्च तरलतरस्वभा-
वस्य परमेश्वरविग्रहः एवंप्रकारविशिष्टतया अनुसंधेय इति
प्रदर्शितमधुरप्रकारे तस्मिंस्तादितराविषयप्रत्याहृतस्य बाह्येन्द्रि-
यसहितस्य 'अभ्यासेन च कौन्तेय वैराग्येण च गृह्यते'
इति भगवद्वचनात् अभ्यासेन विषयान्तरविरक्त्या च
स्थिरीकार्यत्वात् भुक्तिमुक्त्यभिलाषुकसुकृतिजनानुग्रहपरमकरु-
णापराधीनचेताः परमेश्वरावतारभेदभूतो भगवान् श्रीम-
च्छारीरकमीमांसाभाष्यकारः तद्विग्रहप्रकाशनाय भगवतः पु-
रुषोत्तमस्य पादादिकेशान्तविग्रहवर्णनरूपं स्तोत्रमारभमाणः
तद्द्वारा सकलवेदधर्मशास्त्रपुराणेतिहासमीमांसान्यायाद्यर्थांश्च
प्रसङ्गतो व्युत्पिपादयिषुः प्रारिप्सितग्रन्थस्य अविघ्नपरिसमा-
प्त्यादिप्रयोजनसिद्धये निखिलदनुजनिशिचरकुलमुखदुरितभ-
रनिरसनेन भुवनपालनजागरूकाणामचिन्त्यमाहिम्नां भगवतो
दिव्यायुधानामन्येषां च तदन्तरङ्गभूतानां परिवारविशेषाणां
स्तुत्या प्रथमतः प्रसादोन्मुखत्वमापादयति, तत्प्रसादमन्त-
रेण निरन्तरनिराकुलेन मनसा भगवद्विग्रहस्य प्रवेष्टुमशक्य-
त्वात् । न खलु प्रतिहारादिपरिवारावर्जनमन्तरेण नरपतिसे-
वायाः सौकर्यम् । तत्रापि 'भूतादिमिन्द्रियादिं च द्विधा-

हंकारमीश्वरः । बिभर्ति शङ्खरूपेण शार्ङ्गरूपेण च स्थितम्' इति, 'भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकं ततः' इति, 'शङ्खप्रान्तेन गोविन्दस्तं पस्पर्श कृताञ्जलिम्' इत्यादिविशिष्टार्थप्रतिपत्त्यर्थविवेचनैः समग्रज्ञानप्रकाशकस्य शब्दब्रह्मात्मकस्य शङ्खराजस्य प्रथमं वर्णनेनावर्जनं विशिष्टार्थप्रतिपत्त्यर्थं करोति—

**लक्ष्मीभर्तुर्भुजाग्रे कृतवसति सितं यस्य रूपं विशालं**
**नीलाद्रेस्तुङ्गश्रृङ्गस्थितमिव रजनीनाथबिम्बं विभाति ।**
**पायान्नः पाञ्चजन्यः स दितिसुतकुलत्रासनैः पूरयन्स्वै-**
**र्निध्वानैर्नीरदौघध्वनिपरिभवदैरम्बरं कम्बुराजः ॥१॥**

ननु 'प्रसन्नवदनं चारुपद्मपत्रायतेक्षणम्' इत्यादिभिः पुराणेष्वेव धारणाधारस्य श्रीधरविग्रहस्य वर्णितत्वात् किमिदानीं वर्णनान्तरप्रयासेन ? अत्रोच्यते— इह खलु उत्तममध्यममन्दभेदेन अधिकारिणो बहुविधा भवन्ति । तत्रोत्तमः पुरातनजन्मशतोपार्जितपुण्यवासनावशात् प्रसन्नान्तःकरणो वाक्यश्रवणमात्राच्च शाकवदाप्नुयादित्याचार्योक्तक्रमेण संक्षिप्य सत्कृतोपदेशेन करतलकलितमिव कनककटकमभिमतमर्थमनुभवति । मध्यमस्तु कविविस्तरमपेक्षते । मन्दमतिः पुन-

रपि महता विस्तरेण प्रकाशितमर्थं कथंचित्प्रतिपद्यते। किंचित्प्रतिपादनप्रकारभेदोऽपि कश्चन कस्मैचन रोचते। अतः परस्मै ततोऽपि संक्षेपविस्तरावपेक्ष्येते। 'इष्टं हि विदुषां लोके समासव्यासधारणम्' इति व्यासोक्तेः 'भिन्नरुचिर्हि लोकः' इति 'रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषाम्' इत्याद्याचार्यवचनात् रुच्यर्थित्वव्युत्पत्तयश्चात्र मूलम्। तथा च आहुः— 'यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते। आभासो व्यर्थ एकस्मिन्ननुसन्धानसाधितः' इति। व्युत्पाद्यभेदापेक्षया हि शास्त्राणि विचित्राणि विस्तीर्यन्ते। अन्यथा परिमिताक्षरोपदेश्येन तत्त्वेन सर्वेषां चरितार्थत्वात् किमर्थ एष विविधविकल्पजल्पकल्पनाजटिलो ग्रन्थस्कन्धातिभारनिबन्धः? एकेनैव मन्त्रेणाभिमतसकलार्थसिद्धौ किंप्रयोजना चेयं बहुविधमन्त्रतन्त्रपारतन्त्र्ययन्त्रणेत्यलमतत्त्वरसभावालंकारतरङ्गितभङ्गिप्रतिपादनेन। सरसतामापाद्य मृदुलसरलमतीनामतिगहनेऽस्मिन्नर्थेऽवतरणार्थं सार्थक एव परानुग्रहैकसकलव्यापाराणामपारज्ञानपारावाराणां भगवतामाचार्याणामारम्भ इति स्थितम्। प्रकृतमनुसरामः—

जलदवर्णवर्णनपरेण प्रबन्धेनैव प्रयुक्तेऽपि मङ्गले अभ्युच्चयार्थं

मङ्गलोपक्रमाणि मङ्गलमध्यानि मङ्गलान्तानि च काव्यादीनि कर्तुः श्रोत्रादीनां चैहिकामुष्मिकप्रसावकानि च भवन्ति इति द्योतयितुं मङ्गलदेवतायाः कमलवासिन्याः प्रधाननाम्ना लक्ष्मी-शब्देनोपक्रममाणः तत्प्राणेश्वरस्य मुकुन्दस्य भुक्तिमुक्तिप्रदत्वं भक्तेभ्यः प्रकाशयति कविः। लक्ष्म्याः भर्ता; 'डुभृञ् धारणपोषणयोः' इति धात्वर्थश्रवणात् सदा तदधिदेवतारूपामुरसा धारयति, भक्तेषु धनधान्यादिरूपेण ज्ञानरूपेण च पोषयति च यः तस्येत्यर्थः। विशेषणमात्रप्रयोगो विशेष्य-प्रतिपत्ताविति लक्षणात् लक्ष्मीभर्तुरित्युक्त्यैव विशेष्यस्य विष्णोरञ्जसा प्रतीतेरनुपचरितस्य च लक्ष्मीधारणस्य भगवत्येव संभवात् विशेषणमेव प्रयुक्तमित्यवगन्तव्यम्। भर्तुरिति योग-रूढ्या पाणिग्राहकत्वं प्रतिपादयन् पतिव्रतायास्तस्याः तद्भ्रूक्षे-पवशवर्तित्वं च द्योतयति। लक्ष्मीभर्तुः न तु लक्ष्म्या भर्तु-रिति—समासे गुणीभावेन तस्याः प्रतिपादनादप्ययमर्थो व्यज्यते। 'भुजाग्रे बाहुशिखरे बाहा बाहुर्भुजा' इति स्कन्धादधः कूर्परादूर्ध्वं च यः प्रदेशः तस्य भुजसंज्ञा यद्यप्यभिधानशास्त्रे पठिता, तथाप्यत्र स्कन्धादिः करान्तः समुदाय उच्यते। 'तदेतदाजानुविलम्बिना ते ज्याघातरेखा स्थिरलाञ्छनेन। भुजेन रक्षापरिघेण भूमेः' इति, 'अस्पृ-ष्टखड्गत्सरुणापि चासीद्रक्षावती तस्य भुजेन भूमिः' इति,

'पततु शिरस्यकाण्डयमदण्ड इवैष भुजः' इत्यादिप्रयोगदर्शनात् । अग्रशब्देनात्र करतलमुच्यते । स्थितिकर्तुर्भगवतस्त्रिभुवनपालने प्रधानसाधनत्वात् प्रथमं भुजग्रहणम् । ततो जातत्वाद्धि क्षत्रवर्णस्य प्रजापालनेऽधिकारः, यद्धि यस्य प्रधानसाधकतमं तस्य तत्स्तुतिः प्रीतये इति भावः । भुजाग्रे, न तु कराग्रे इत्युक्तिः, वक्ष्यमाणोपमाघटनार्थम् । कृतवसतिं, अनुष्ठितनिवासम्; न तु कारितवसतीति । अनेन देवतात्मत्वाच्चेतनत्वेन स्वयमेव संनिहितत्वमुच्यते, 'हेतिभिश्चेतनावद्भिरुदीरितजयस्वनम्' इत्यादिवचनात् । सितम्, धवलम् । ननु तामसाहंकाररूपस्य कथं सितत्वोक्तिः? कारणगुणप्रक्रमेण कार्यगुणारम्भ इति न्यायात् कार्ष्ण्यस्यैवोपपत्तेः । 'अजामेकां लोहितशुक्लकृष्णाम्' इति तमसः कृष्णवर्णत्ववचनात् इति चेत्, सत्यम्; तथाप्युपासनोपयुक्तत्वेनैव तामसाहंकारत्ववासना अस्योच्यते, न त्वनुभवतः । स तु धवलत्वमेव दर्शयति; न च अस्य प्रत्यक्षस्य भ्रान्तित्वम्, बाधाभावात् । कारणप्रक्रमोक्तिस्तु प्रायिकापेक्षा, लोके विरुद्धगुणकार्योक्तिदर्शनात्— श्वेतयोः पित्रोः नीलवर्णपुत्रसूतिदर्शनात् । शाकाद्याहारपरिणतिः तत्रोपाधिरनुमीयते इति चेत्, अत्रापि ईश्वरेच्छैवोपाधिरनुमीयताम् इति न कश्चिद्विरोधः । गोमयादेर्वृश्चिकोत्पत्तिरपि

साधितेऽर्थे प्रमाणमिति मन्तव्यम् । रूपं स्वाभाविकः संस्थानविशेषः । 'रूपं महत्ते बहुवक्त्रनेत्रम्' 'तथाप्यनेकरूपस्य तस्य रूपोऽहर्निशम्' इत्यादिप्रयोगात् । 'रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ सितादिषु । सौन्दर्ये च स्वभावे च' इति वैजयन्ती । विशालं विस्तीर्णम् । आयतेरप्युपलक्षणमिदम् । 'अहो विशालं भूपाल भुवनत्रितयोदरम्' इतिवत् । 'विशालमुरु विस्तीर्णम्' इति वैजयन्ती । 'वेः शालच्छङ्कटचौ' इति शालच्प्रत्ययः । नीलाद्रेः, 'हिमवान् हेमकूटश्च निषधश्चेति दक्षिणे । नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः' इत्युत्तरस्य मेरुमुत्तरेण वर्तमानस्य महानीलरत्नमयसर्वाङ्गकतया नीलनाम्नः पर्वतश्रेष्ठस्येत्यर्थः । तुङ्गशृङ्गस्थितम , तरणिरथसरणिरोधिनि शिखरे निषण्णम् । रजनीनाथबिम्बम् ; संपूर्णतया निशायाः सर्वस्याः स्वामीति व्यपदेशयोग्यस्य । अन्यथा निशैकदेशस्वाम्यात् तथा वचनस्यौपचारिकत्वात् । चन्द्रस्य बिम्बं मण्डलमिव भाति प्रकाशते । ननु सितमिति स्वयमुक्तस्य कम्बुराजस्य मलिनकलङ्कचुम्बनविडम्बितमिन्दुबिम्बं कथमुपमानत्वेनोपादीयते ? उच्यते— हन्त निरूपयत्वायुष्मान्, नवमेघश्यामस्य दामोदरस्य भुजाग्रे इति तत्प्रभानिकुरुम्बकरम्बितत्वद्योतनादत्रापि कलङ्कप्रतिवस्तुकालिमानुबन्धः कविवादिसहृदयशिरो-

मणिभिराचार्यैः प्रकाशित एव । विभाति, न तु श्रूयते इति; अनेन 'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप' इति, 'न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा । दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम्' इति, 'तदीक्षणाय स्वाध्यायश्चक्षुर्योगस्तथापरम् । न मांसचक्षुषा द्रष्टुं ब्रह्मभूतः स शक्यते' इत्यादिवचनैः भक्तिज्ञानयोगात्मकदिव्यचक्षुर्गोचरतया भगवद्विग्रहस्य स्वस्य च गुरुप्रसादात् उक्तलक्षणदिव्यचक्षुःसंपन्नतया तत्त्वतस्तस्यानुभूतत्वं व्यज्यते । विभाति, न तु विभातमिति वर्तमाननिर्देशात् भवतामपि भक्त्यादिनिष्ठत्वे तथा प्रकाशत एव । अतः अस्मिन्नर्थे निस्तन्द्रैः प्रयतितव्यं भवद्भिरिति श्रोत्रादीन् प्रत्युपदेशः क्रियते । विभाति, न तु दृश्यते इति स्वतो धवलस्यास्य हरिभुजप्रभानीलिम्ना परभागलाभात् विशेषदृश्यत्वम् नैसर्गिकश्वैत्यस्यापि शशिबिम्बस्य यथा 'लक्ष्म लक्ष्मीं तनोति ...किमिव हि मधुराणां मण्डनं नाकृतीनाम्' इति न्यायादिति द्योत्यते । पायात् रक्षत्विति आशिषि प्रार्थने वा लिङ् । पा रक्षणे इति धातुः । नः अस्मानिति स्वस्य स्वमतानुसारेण भगवदुपासकानां च सर्वेषां संग्रहः । पाञ्चजन्यः, पञ्चजनाः मनुष्याः । 'स्युः पुमांसः पञ्चजनाः पूरुषाः पुरुषा नरः' इत्यमरः । तेषां हितः अनिष्टनिवा-

रणात् । पञ्चजनो नाम शङ्खरूपी समुद्रान्तश्चरः कश्चिदसुरः ; तद्वधेन गृहीतः तदस्थिसंभवत्वाद्वा पाञ्चजन्यः । हितार्थे भवार्थे वा तद्धितः । सः, यस्येति यच्छब्देन यः परामृष्टः सः, तादृश इत्यर्थः । दितिसुतकुलत्रासनैः, दाक्षायण्याः कश्यपदाराणां दितेः सुताः पुत्राः हिरण्यकशिपुप्रभृतयः तेषां कुलस्य सन्तानस्य विरोचनबलिबाणादीनामित्यर्थः । त्रासनैः, भयकम्पसंपादकैः । प्रह्लादस्यापि तत्कुल्यत्वेऽपि प्रायिकत्वात् त्रासनत्वोक्तिः । अथवा तस्यापि भगवतैवाप्रमादाय विनेयत्वात् ; 'भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति' इति श्रुतेः देवानामपि भगवता त्रास्यत्वम् ; किं पुनरसुराणामिति द्योत्यते । 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट् । पूरयन् निर्विवरं कुर्वन् । स्वैः, हरिमुखपवनपूरणस्य कादाचित्कत्वात् मन्दमारुतापूरणजनितैरात्मीयैः निध्वानैः घोषैः । 'मन्दानिलापूरकृतं दधानो निध्वानमश्रूयत पाञ्चजन्यः' इति माघोक्तेः । नीरदौघध्वनिपरिभवदैः, मेघपरम्परायाः गर्जितानां परिभवं गर्वभङ्गं दातुं शीलं येषां तैः । नीरदैर्बहुभिरपि अम्बरैकदेशस्यापि पूरणस्याशक्यत्वात् दितिसुतकुलत्रासनस्याप्यकरणात् । अनेन एकेनापि स्वनिध्वानैः सकलस्याप्यम्बरस्य पूरणात् दितिसुतकुलत्रासनेन लोकानुग्रहाच्च नीरदौघध्वनिपरिभवद-

त्वमिति भावः । कम्बुराजः, शङ्खजातेरेव सार्वभौमः 'राजाहःसखिभ्यष्टच्' इति टच् । भगवत्करकमलसततसांनिध्यस्य जगदन्तरङ्गपरत्वस्य च निरतिशयसुकृतकार्यस्य शङ्खान्तरेष्वसंभवादिति भावः । 'त्रयी तु कम्बुः शङ्खोऽस्त्री' इति वैजयन्ती । अत्र पूर्वार्धे उपमालंकारः, लक्ष्मीभर्तृभुजाग्रकम्बुराजानां नीलाद्रितुङ्गशृङ्गरजनीनाथबिम्बानां च बिम्बप्रतिबिम्बभावेन निर्देशात् । उपमया भगवतो नीलस्निग्धप्रभुत्वादि, भुजस्य वृत्तोत्तुङ्गस्थिरत्वादि, कम्बुराजस्य प्रसन्नधवलवृत्तत्वादि च प्रतीयते । उत्तरार्धे व्यतिरेकोऽधिकश्चालंकारः । नीरदौघादस्यातिशयप्रतिपादनात्, आश्रयादम्बरत आश्रितानां निध्वानानामाधिक्यकथनाच्चेति मन्तव्यम् ॥

इत्थं वागर्थप्रतिपत्तये शब्दब्रह्मात्मकं शङ्खराजमुपास्य इदानीं सर्वतो रक्षासिद्धये भगवदायुधानां प्रधानं चक्रराजमुपासितुमुपक्रमते—

**आहुर्यस्य स्वरूपं क्षणमुखमखिलं सूरयः कालमेतं**
**ध्वान्तस्यैकान्तमन्तं यदपि च परमं सर्वधाम्नां च धाम ।**
**चक्रं तच्चक्रपाणेर्दितिजतनुगलद्रक्तधाराक्तधारं**
**शश्वन्नो विश्ववन्द्यं वितरतु विपुलं शर्म घर्मांशुशोभम् ॥**

स्वरूपं स्वमनारोपितं रूपं विग्रहम्, आयुधत्वादीनां जगदनुग्रहायारोपितत्वात्। क्षणमुखम्, 'अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कलाः तास्तु त्रिंशत्क्षणस्ते। तु मुहूर्तो द्वादशास्त्रियाम्' इति लक्षितः क्षण आदिर्यस्य। सूक्ष्मावयवत्वसामान्यात् क्षणशब्दो लक्षणया लवमाह। 'नलिनीपत्रसंहत्याः कृते सूच्यभिवेधने। दले दले तु यः कालः स कालो लव उच्यते' इति लवस्यैवाद्यावयवत्वेन व्यवहारात्। अखिलं समग्रम्, प्रलयावसानमित्यर्थः। 'लवादिः प्रलयान्तश्च' इति सूक्ष्मस्थूलयोराकारयोरागमेषु परिच्छिन्नत्वात् लवमारभ्य परार्धब्रह्मायुरवसानप्रवृत्तप्राकृतलयावसानमित्यर्थः। अथवा क्षण एव कालस्यान्त्योंशः; यथापकर्षपर्यन्तद्रव्यं परमाणुः, एवमपकर्षपर्यन्तः। कालः, 'प्रकृतेर्गुणसाम्यस्य निर्विशेषस्य मानव। चेष्टा यतः स भगवान् काल इत्युपलक्षितः' इति श्रीभागवते, 'अथ सूक्ष्मा परा शक्तिः कालात्मनि महात्मनि। अस्मान्निष्क्रम्य संक्रान्ता विप्रुडग्नेरिवायसी' इति श्रीवायवीये लक्षितं चिरमिति प्रत्ययात् साधारणकारणमनाद्यन्तव्यापकं तत्त्वविशेषः। एतमिति, सर्वलोकप्रसिद्धत्वाभिनयः, तिथिवारनक्षत्रादिरूपेण आबालगोपालं प्रसिद्धतममित्यर्थः। सूरयः, पराशरबादरायणप्रभृतयः सर्वज्ञाः आहुः कथयन्ति, 'त्रिनाभिमति पञ्चारे षण्णेमिन्यक्षयात्मके। संवत्सरमये कृत्स्नं

कालचक्रे प्रतिष्ठितम्' इत्यादिवचनैः, दाशतेयसंहितायामस्यवामीये 'त्रिनाभिचक्रमजरमनर्घम्' इति 'सप्त युञ्जन्ति' इत्यादिभिश्च तन्मात्रभूतादिभिरित्यर्थः । ध्वान्तस्य तमसः । 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्यमरः । एकान्तम्, एकमद्वितीयमन्तं नाशं बहिरन्तः सर्वदेशेषु सर्वकालेषु च प्रतिकूलं परमर्थः । अपि च न केवलं कालतत्त्वात्मकमेवाहुः, अन्यच्च वक्ष्यमाणमाहुरित्यर्थः । परम् उत्कृष्टं सर्वधाम्नां सर्वेषां तेजसां धाम आस्पदम् । 'चक्राभिधानो हरिः' इत्यादिभिश्चक्रराजस्य विश्वात्मकत्वप्रसिद्धेः, 'येन सूर्यस्तपति तेजसेद्धः' 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इत्यादिभिश्च श्रुतिवचनैः । अथवा सर्वधाम्नामिति निर्धारणे षष्ठी । समस्तानां तेजसां मध्ये परममुत्कृष्टं तेज इत्यर्थः, 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । चक्रम्, रथाङ्गाकारेण विवृत्ततया चक्राख्यम्, 'चक्राभिधानो हरिः' इत्याचार्योक्तेः । चक्रपाणेः, चक्रमुक्तरूपं पाणौ यस्येति । प्रहरणान्तरेभ्यः अस्य सदा धार्यमाणत्वं द्योत्यते । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति सप्तम्यन्तस्य परनिपातः । दित्यां जाताः दितिजाः, असुराः । 'सप्तम्यां जनेर्डः' इति डः । दितिजानां तनोः शरीरात् गलन्त्या खण्डि-

तत्वात्स्रवन्त्या रक्तस्य रुधिरस्य धारया स्रोतसा अक्ता लिप्ता धारा शिततरः पर्यन्तभागो नेमिसंज्ञो यस्य तत्। 'धारा-स्त्राग्रेऽम्बुसंतत्यां सैन्यादेश्च गतिष्वपि' इति वैजयन्ती। अनेन विशेषणेन साधुजनपरित्राणेन धर्मसंस्थापनार्थाय दुष्कृतिजनविनाशनताच्छील्यं ध्वन्यते। नलि नित्यं विश्वस्य सर्वस्य लोकस्य वन्द्यं स्तुत्यं विश्वस्य परमः रणात्। वित-रतु ददातु। आशिषि प्रार्थने वा लोट्। 'विश्राणनं वित-रणं स्पर्शनं प्रतिपादनम्' इत्यमरः। विपुलं विस्तीर्णमिति वितरणक्रियाकर्मणः शर्मणो विशेषणम्। शर्म सुखम्। वि-पुलं शर्मेत्यनेन सांसारिकस्य सर्वस्यापि सुखस्य मिश्रतया नश्वरतया च संकुचितत्वात् भगवदुपासनेष्ववघातखेदवदा-नुषङ्गिकत्वाच्च प्रेक्षावद्भिरप्रार्थनीयत्वम्, 'तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते', 'तस्यान्त-रायो मैत्रेय ब्रह्मेन्द्रत्वादिकं फलम्' इत्यादिवचनैः; अतो विपुलस्य निरतिशयस्यापवर्गाख्यस्यैव परमसुखस्य प्रार्थ-नीयत्वमिति व्यज्यते। घर्मांशुशोभम्, यस्य शोभा भक्तवि-षये प्रसन्नावस्था, घर्मांशुरादित्य इव समस्तार्थप्रकाशकत्वात् अतिदुःसहत्वाभावाच्च। दुष्टविषयायास्तु घोरावस्थाया दुः-सहत्वात्। 'द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः। एका घोरा शिवा चान्या ते वै च शतधा पुनः' इति,

'दृष्ट्वाद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन्' 'आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा' इत्यादिवचनैः भगवतो रूपद्वयप्रतिपादनात्। घर्मांशोः सूर्यस्येव शोभा यस्येति व्याख्याने सर्वधाम्नां परं धामेति सूर्याद्यतिरिक्तत्वोक्तेर्व्याहतिः स्फुटैव। अथवा विपुलं शर्मेति तत्त्वज्ञानमुच्यते, परमसुखसाधनत्वात्, कारणे कार्योपचारात्। तस्य विशेषणं घर्मांशुशोभमिति। आदित्यस्य शोभा प्रभेव शोभा यस्य, समस्तार्थप्रकाशकत्वात् 'तेषामादित्यवत् ज्ञानं प्रकाशयति तत्परम्। यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम्' इत्यादिवचनैः। अस्मिन्नर्थे समाप्तपुनरात्तत्वदोषप्रसङ्गोऽपि परास्तः। अत्र पूर्वार्धे सूक्ष्मं व्यतिरेकश्चालंकारः, कालरूपस्य सूक्ष्मार्थस्य प्रकाशनात् धामान्तरेभ्योऽधिकप्राग्भ्रादनाच्च। उत्तरार्धे पर्यायोक्तमुपमा च, रक्तधारात्त्वकथनभङ्ग्या दितिजविजयस्य प्रकाशनात् घर्मांशुसादृश्यकथनाच्च ॥ २ ॥

'चक्रस्वरूपं च मनो विष्णुर्धत्ते करे स्थितम्' इति वचनात् मनःप्रसादाय मनस्तत्त्वात्मकं भगवतः सुदर्शनम् एवमुपास्य इदानीं राजसाहंकारस्वरूपमिन्द्रियादिं शार्ङ्गधनुःश्रेष्ठं ज्ञानकर्मेन्द्रियप्रसादनार्थमुपास्ते—

**अव्यान्निर्घातघोरो हरिभुजपवनामर्शनाध्मातमूर्ते-**
**रस्मान्विस्मेरनेत्रत्रिदशनुतिवचःसाधुकारैः सुतारः ।**
**सर्वं संहर्तुमिच्छोररिकुलभुवनं स्फारविष्फारनादः**
**संयत्कल्पान्तसिन्धौ शरसलिलघटावार्मुचः कार्मुकस्य ॥**

अव्यात् रक्षेत् इत्याशिषि लिङ् । अव रक्षणे इति धातुः । निर्घातघोरः निर्घातवत् भीषणः, निर्घातैः क्रूरश्च । 'पवनः पवनाभिहतो गगनादवनीं यदा समापतति । भवति तदा निर्घातः' इति वराहमिहिरः । 'वातपातस्तु निर्घातश्चण्डकोऽप्यशनिर्न षण्' इति वैजयन्ती । हरिभुजपवनामर्शनाध्मातमूर्तेः नारायणस्य बाहुरेव वायुः, अप्रतिमबलत्वात्, पूतत्वाच्च, तस्यामर्शनं स्पर्शनं तेन आध्माता आप्यायिता नभसि विस्तारिता व्यापारिता च मूर्तिर्यस्य । 'अथ माल्यादिश्वेताभमारुह्यैरावतं गजम् । साहाय्यं वः करिष्यामि वाय्वम्बूत्सर्गयोजकः' इति श्रीविष्णुपुराणोक्तेः । विस्मेरनेत्रत्रिदशनुतिवचःसाधुकारैः सुतारः, विस्मेराणि अद्भुतेन रिपुनिरसनेन धारासारेण च विस्मयशीलानि चक्षूंषि येषाम् । 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इति रप्रत्ययः । मध्ये पदानां चमत्कारप्रयुक्तैः साधु साध्विति वचनकरणैश्च । 'णु स्तुतौ' इत्यस्मात् स्त्रियां क्तिन्; नुतिः । हाहाकारो महानभूदित्यादिवत् सा-

धुकारः । सुतारः सुष्ठूच्चैस्तरध्वनिः संमिश्रत्वात् । 'उच्चैस्तरो ध्वनिस्तारः' इत्यमरः । सर्वं निरवशेषमित्यमर्षातिशयः । संहर्तुं नाशयितुम् इच्छोः इच्छावतः । 'विन्दुरिच्छुः' इति निपातनात्साधुः । देवतात्मत्वादिच्छुत्वोपपत्तिः । अरिकुलभुवनं शत्रूणां धर्मद्रुहां कुलमेव भुवनं लोकं बाहुल्यात्, शत्रुकुलसदृशं भुवनं च युगावसानेष्वधर्मबहुलत्वात् संहार्यत्वमिति भावः । नैमित्तिकप्रलयश्चात्र प्रसज्यत इति मन्तव्यम् । त्रिदशनुतिवचःप्रतिपादनात् भूर्भुवःस्वर्लोकानामेव तदानीमेकार्णवमग्नत्वप्रसिद्धेः । 'एकार्णवं भवत्येतत्त्रैलोक्यमखिलं ततः । ब्रह्मरूपधरः शेते भगवानादिकृद्धरिः । जनलोकगतैः सिद्धैः सनकाद्यैरभिष्टुतः' इत्यादिश्रीविष्णुपुराणवचनात् । स्फारविष्फारनादः प्रवृद्धज्यास्फालनघोषः । 'धनुर्विष्फारनादस्य' इत्यादि महाभारतप्रयोगात्, 'विष्फारयांचकारास्त्रं बबन्धाथ च बाणधी' इति भट्टिकाव्योक्तेः । परस्परघट्टनध्वनिश्च । संयत्कल्पान्तसिन्धौ, ब्रह्मदिवसावसानक्षुभितसमुद्रवत् भीषणायां संयति युद्धे 'संग्रामः समरोऽस्त्री स्त्री संयत्' इति वैजयन्ती । संयति समन्तात् व्याप्नुवति कल्पान्तसिन्धौ शरसलिलघटावार्मुचः, सलिलं जलमिव सर्वाङ्गाप्लावकत्वात् अचेतितमेवान्तःप्रवेशित्वाच्च शरा बाणास्तेषां घटा घटनमविच्छिन्नमनवधिकं च मोक्षणं शरवदुद्वेजकानां घटा

वर्षणं च तस्मिन् कार्ये वार्मुचः मेघस्य। अनायासेन शक्तत्वात् पुष्कलावर्तकादेश्च। कार्मुकस्य शार्ङ्गाख्यस्य धनुषः। कर्मसु लोकानुग्रहरूपेषु कार्येषु शक्तस्य, 'तत्कार्मुकं कर्मसु यस्य शक्तिः' इति भारविवचनात्। अत्र कार्मुकवर्णनप्रस्तावादभिधाया नियन्त्रणादर्थान्तरप्रतीतिः शब्दशक्तिमूलध्वनिविषयः रूपकालंकारपरिग्रहात् ध्वनेश्चमत्कारकारित्वात्। शरसलिलघटावार्मुच इति समस्तत्वात् हरिभुजेत्यादीनां संबन्धस्य क्लिष्टत्वादभवन्मतयोगदोषप्रसक्तिः व्याख्यातार्थस्य च कष्टकल्पनया प्रतीतिश्च अर्थपर्यालोचनपरैः सहृदयैः सह्या, सर्वविदामाचार्याणामाशयस्यास्माभिर्दुरवगाहत्वात्। अथवा शरसलिलघटा इति व्यस्तं पदम्। शरसलिलस्य घटां समूहमयते व्याप्नोतीति क्विबन्तव्युत्पत्त्या नादस्य विशेषणम्। 'धाराभिर्हस्तिहस्ताभिः' इत्यत्र अमृततरङ्गिणीकारैस्तथा व्याख्यातत्वात्। वाक्यस्य असंबद्धार्थता मा भूदिति वाच्यव्यङ्ग्ययोरर्थयोरुपमेयोपमानभावः कल्प्य इत्युपमालंकारो व्यङ्ग्यः ॥ ३ ॥

अथ 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति भगवद्वचनात् 'बिभर्ति यच्चासिरत्नमच्युतोऽत्यन्तनिर्मलम्। विद्यामयं तु तज्ज्ञानमविद्याचर्मसंस्थितम्' इति श्रीविष्णुपुराणवचनाच्च अविद्याकोशसंस्थितविशुद्धाद्वैतज्ञानात्मकमसि

रत्नम् अज्ञाननिरसनेन सम्यग्ज्ञानप्रकाशनाय वरिवसितुमारभते—

**जीमूतश्यामभासा मुहुरपि भगवद्बाहुना मोहयन्ती**
**युद्धेषूद्धूयमाना झटिति तटिदिवालक्ष्यते यस्य मूर्तिः ।**
**सोऽसिस्त्रासाकुलाक्षत्रिदशरिपुवपुःशोणितास्वादतृप्तो**
**नित्यानन्दाय भूयान्मधुमथनमनोनन्दनो नन्दको नः ॥**

अर्थान्नवमेघस्येव श्यामा नीला भाः प्रभा यस्य तेन मुहुः अनुक्षणम् । अपिर्भिन्नक्रमः । भगवद्बाहुना पुरुषोत्तमस्य भुजेन युद्धेषु मुहुरुद्धूयमाना प्रतिक्षणं कम्प्यमानापीत्यन्वयः । अपिशब्देनैतदाह— प्रथमे द्वितीये वा दर्शने तटिद्भ्रान्तिः पश्यतां भवतु नाम, शतशो दर्शनेऽपि भुजस्य जीमूतसाम्यसंपत्तेरसिवरस्य च स्फुरद्रूपत्वात् पश्यतां तटिद्भ्रान्तिः सर्वदा कथं भवतीत्याश्चर्यमेतदत्र दृष्टमिति । अमुमेवार्थं विवृणोति मोहयन्तीति । तरुणजलदे स्फुरन्ती इयं तटित् मम शिरसि पतति मम शिरसि पतेदिति प्रत्येकं रिपूणां भगवत्प्रचारशैघ्र्यात् व्याकुलतामादधानेत्यर्थः । झटिति शीघ्रम् । तटित् विद्युदिव आलक्ष्यते, समन्तात् दृश्यते । झटिति दृश्यते इत्यनेन तरणिकिरणप्रतिफलनाप्रतिफलनयोर्दर्शनादर्शनाभ्यां तटित्स्वभावस्फुटीभावः प्रकाश्यते । मूर्तिः उग्रत-

राग्रः निशितोभयधारः स्पष्टमुष्टिः पट्टिकाकारः संस्थानविशेषः। यस्य मूर्तिरित्यनेन मूर्तिमत्या देवतायाः पृथक्त्वं तत्संबन्धित्वं च मूर्तेः प्रकाश्यते। असिः खड्गः। 'खड्गः प्रचारोऽसिः' इति वैजयन्ती। त्रासाकुलाक्षत्रिदशरिपुवपुःशोणितास्वादतृप्तः प्राणापाये भयेनाकुलानि तरलान्यक्षीणि येषाम्। ननु महावीराणामसुराणां कथं त्रासाकुलाक्षत्वम्? कथं च भगवतो धीरोदात्तशिखामणेः परमकारुणिकस्य भीतजनहिंसोद्यमश्चाचार्यैः प्रतिपाद्यत इति, उच्यते— 'भये सर्वेऽपि बिभ्यति' इति श्रीरामायणोक्तरीत्या सर्वेषामपि प्रबलशत्रुवशवर्तित्वेन प्राणापायनिर्णये स्वयमेव भयस्य प्रादुर्भाव उपपन्नः—यथा महाभारतसमरारम्भसमये महावीरस्य सव्यसाचिनः स्नेहकातर्योदयः, यथा च तस्यैव भगवद्विश्वरूपदर्शनेन 'सगद्गदं भीतभीतः प्रणम्य' इत्यादिवचनैः भीतत्वप्रतिपादनम्। अत एव हि त्रासाकुलाक्षेत्युक्तिः। न तु त्रासाकुलितेत्युक्तिः स्वारसिकत्वं द्योतयितुम्। महावीरस्य करुणाकरस्यापि भगवतो धर्मत्राणाय दुष्टजननिग्रहोद्यमोऽपि न दोषाय। 'वध्यः सर्प इवानार्यः' इति, 'निपातनीया हि सतामसाधवः' इति, 'अवध्ये यो भवेद्दोषो वध्यमाने जनार्दन। स वध्यस्यावधे दृष्ट इति धर्मविदो विदुः' इत्यादिवचनैः प्रत्युत धर्मत्वावगमात्। 'एकस्मिन् यत्र निधनं प्रापिते दुष्टचारिणि। बहूनां

भवति क्षेमस्तस्य पुण्यप्रदो वधः ' इति स्मृतेः । अत एव त्रिदशरिपुशब्देनोक्तिः । त्रिदशा देवाः तेषां रिपवः शत्रव इति धर्मध्रुक्त्वोपलक्षणम्, 'वैषम्यनैर्घृण्ये न सापेक्षत्वात् ' इति स्मृतेः । त्रिदशरिपूणां वपुः शरीरं तस्य यच्छोणितं रुधिरं तदास्वादेन तद्रसानुभवेन तृप्तः प्रीतः ; दृप्तः इति वा पाठः, गर्वित इत्यर्थः । नित्यानन्दाय, शब्दादिविषयानुभवस्फुरितानामप्यात्मरूपत्वेऽप्यौपाधिकत्वेनानित्यत्वात् निरुपाधेरात्मस्वरूपस्यैव नित्यत्वादानन्दत्वाच्च, 'अजो नित्यः शाश्वतोऽयं पुराणः ' 'विज्ञानमानन्दं ब्रह्म ' इत्यादिश्रुतेः । तस्मै तं नित्यमानन्दम् आत्मत्वेनानुभावयितुं 'तुमर्थाच्च भाववचनात् ' इति चतुर्थी । भूयादित्याशिषि लिङ् । मधुमथनमनोनन्दनः, मधुकैटभाख्ययोरसुरयोर्मध्ये मधुसंज्ञकस्य मथनः हिंसक इति दुष्टमथनताच्छील्योपलक्षणम् । तस्य भगवतो मनो हृदयं नन्दयितुं शीलं यस्य । स्वाशयानुरूपं रिपुविशसनानुष्ठानादिति भावः । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ' इति ल्युट् । नन्दक इति योगरूढ्या संज्ञा, 'नाम्नापि तस्यैव स नन्दकोऽभूत् ' इति माघोक्तेः । 'कौमोदकी गदा खड्गो नन्दकः ' इत्यमरः । नन्दकस्य विद्यात्मकत्वात् अविद्याध्यस्तस्य बन्धस्य विद्ययैव निवर्त्यत्वात् 'बन्धोऽस्याविद्यया

पुंसो विद्यया च विमुच्यते' इति वचनैः, अतः तद्रूपो नन्दकः। विदेहकैवल्यरूपनित्यानन्दप्रार्थनोपपत्तिः, 'पुण्यरज्ज्वा व्रजेदूर्ध्वं पापरज्ज्वा व्रजेदधः। द्वयं ज्ञानासिना छित्वा विदेहः शान्तिमृच्छति' इत्यत्रापि विज्ञानात्मकं नन्दकमभिप्रेत्य ज्ञानासिनेत्युक्तिः। उपमा अत्र अलंकारः ॥ ४ ॥

विद्यातत्त्वात्मकमसिरत्नमुपास्य इदानीं 'बुद्धिरस्यास्ते गदारूपेण माधवम्' इति वचनात् बुद्धितत्त्वात्मिकां गदामुपासितुमुपक्रमते, विशुद्धबुद्धिविधेयत्वाद्विद्यायाः, 'नास्ति बुद्धिरयुक्तस्य न चाबुद्धस्य भावना' इत्यादिभगवद्वचनात् 'सर्वेषामेव लाभानां प्रज्ञालाभः परः स्मृतः' इति, 'शुद्धा हि बुद्धिः किल कामधेनुः' इत्यादिवचनात् ॥

**कम्राकारा मुरारेः करकमलतलेनानुरागाद्गृहीता**
**सम्यग्वृत्ता स्थिताग्रे सपदि न सहते दर्शनं या परेषाम्।**
**राजन्ती दैत्यजीवासवमदमुदिता लोहितालेपनार्द्रा**
**कामं दीप्तांशुकान्ता प्रदिशतु दयितेवास्य कौमोदकी नः ॥**

कम्रः सुन्दरः। 'कमुकान्तौ' इत्यस्मात् 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इत्यादिना रः। आकारः संस्थानविशेषो यस्याः। करकमलतलेन पद्मवत् कोमलस्य पाणे-

रुदरेण अनुरागात् निजपराक्रमानुगुणसाहाय्यकरणस्नेहात् रत्याख्यभावबन्धप्रकर्षाच्च गृहीता धारिता परिणीता च सम्यग्वृत्ता शोभनवर्तुलाकारा विशुद्धचारित्रा च । 'वृत्तं च वर्तुलम् । आचारो वृत्तचारित्रचरित्रचरणानि च' इति वैजयन्ती । अग्रे स्थिता सदा समरोन्मुखत्वेन पुरतः निहिता; आज्ञाप्यताम् किं करोमि इति नियोगानुगुण्येन दृष्टिगोचरे स्थिता च । परेषां शत्रूणां दर्शनं रणोद्योगेनाभिमुखीभूयाग्रे स्वप्रकाशनं सपदि न सहते शीघ्रं न क्षमते, समग्रदर्शनात् पूर्वमेव तेषामुपसंहरणात्; परेषां भर्तुरन्येषां दर्शनं तैरात्मनो विलोकनं स्वकर्तृकं वा तद्दर्शनं सपदि न सहते कुलाङ्गनात्वादाशु तिरोभावात् । राजन्ती दीप्यमाना, तेजोमयत्वात्; मङ्गलालंकारविशिष्टतया शोभमाना च । दैत्यजीवासवमदमुदिता, असुराणां प्राणरूपेणासवेन स्वया तद्रसस्यादरेण पीयमानत्वादर्थात् पीतेन यो मदः चित्तोल्लासः तेन मुदिता हृष्टा; दैत्यानामतिवल्लभतया जीवभूतस्यासवस्य मदेन मुदिता च । लोहितालेपनार्द्रा, प्रस्तावाद्दैत्यानामेव लोहितेन रुधिरेण यदालेपनं रूषितत्वं तेनार्द्रा चिक्कणमूर्तिः; लोहितेन अरुणवर्णेन कुङ्कुमादिना लेपनेन अङ्गरागेण आर्द्रा शीतलाङ्गी च । दीप्तांशुकान्ता, उज्ज्वलैरंशुभिः किरणैः कान्ता अभिरामा, दीप्तो हंसादिशिल्पकल्पनोद्भासितः अंशु-

कस्य दुकूलस्य अन्तः पर्यन्तभागो यस्याः दयितेव प्रियतमा लक्ष्मीरिवेत्यर्थः । अथवान्वयः प्रियतमेवेति । पूर्वस्मिन्नर्थे श्लेषोऽलंकारः । उत्तरस्मिन्पुनः श्लेषानुगृहीतोत्प्रेक्षा । अस्येति मुरारेरिति प्रस्तुतत्वात् भगवतः । 'कौमोदकी गदा' इत्यमरः । कामं काम्यते प्रार्थ्यते इत्यभिमतमर्थम् ईश्वरैक्यानुभवरूपमित्यर्थः प्रदिशतु ददातु । अत्र कम्राकारेत्यादावर्थश्लेषः पर्यायपरिवृत्तिसहत्वात्, सम्यग्वृत्तेत्यादौ शब्दश्लेषः तदसहत्वात्, लोहितालेपनार्द्रेत्युभयश्लेषश्चोभयरूपत्वादनुसन्धेयः । 'विशेष्यस्यापि साम्ये द्वयोर्वोपादाने श्लेषः' इति लक्षणात् उपमानोपमेययोर्द्वयोरप्युपादानादविशिष्टोऽयं श्लेषः ॥

इत्थं पञ्चश्लोक्या परमेश्वरस्य प्रपञ्चरक्षणैकसहायभूतां पञ्चायुधीमुपास्य संप्रति तन्मूर्तिभेदं भगवन्तं गरुत्मन्तमुपासितुमुपक्रमते—

**यो विश्वप्राणभूतस्तनुरपि च हरेर्यानकेतुस्वरूपो**
**यं संचिन्त्यैव सद्यः स्वयमुरगवधूवर्गगर्भाः पतन्ति ।**
**चञ्चच्चण्डोरुतुण्डत्रुटितफणिवसारक्तपङ्काङ्कितास्यं**
**वन्दे छन्दोमयं तं खगपतिममलस्वर्णवर्णं सुपर्णम् ॥**

विश्वस्य ब्रह्माण्डस्यैव प्राणः प्राणयति जीवयतीति धार-

क उच्यते प्राणः भूतः जातः विश्वात्मनो विश्वाधारस्य भगवतो धारणात् । अथवा प्राणः परमात्मा । 'प्राणस्तु प्रणवे जीवे जीविते परमात्मनि । इन्द्रिये वायुभेदे ना बलान्तर्यामिणोरपि' इति वैजयन्ती । प्राणहरणप्रवीणफणिनिरसनात् प्रणवात्मकत्वाद्वायुत्वाद्वा । अत एव हि निरतिशयवेगत्वम् । 'सुपर्णो वायुवाहनः' इति स्मृतेश्च । हरेस्तनुः मूर्तिभेदः । अपिशब्दो यच्छब्दानुकर्षणार्थः । 'वैनतेयश्च पक्षिणाम्' इति भगवद्वचनात् । चकारो भिन्नक्रमः यानकेतुस्वरूप इत्यनुकर्षणार्थः यानं वाहनं तत्स्वरूपः, केतुः ध्वजः सामर्थ्यात् तच्चिह्नस्वरूपश्च । गरुडवाहनत्वात् गरुडध्वजत्वाच्च भगवतः । संचिन्त्य, जगदण्डखण्डनपण्डितचण्डिमविशिष्टत्वेन निरूप्येत्यर्थः । एवेति दर्शनादीनामनपेक्षितत्वमाह । सद्यः तदनन्तरमेवेति क्षणान्तरविलम्बाभावः सूच्यते । उरगवधूवर्गगर्भाः उरगाः नागाः तेषां वधूवर्गस्य भार्यासमूहस्य गर्भाः कुक्षिस्था जन्तवः स्वयं पतन्ति । आघाताद्यन्तरेणापि भयवशात् स्वतो विलीय क्षरन्तीत्यर्थः । संचिन्त्य पतन्तीति पूर्वकालिकक्रियायाः संचिन्तनस्य उत्तरकालिकक्रियायाः पतनस्य च 'समानकर्तृकयोः पूर्वकाले' इति स्मृतेः समानकर्तृकत्वं प्रतीयते । संचिन्तनं च तेषामुदराभ्यन्तरवर्तिनामचेतनकल्पानामनुपपन्नम् । पतनं तु युज्यत एव । तत् कथमिति

चेत्, उच्यते—'द्विहृदयां नारीं दोहदिनीमित्याचक्षते' इति वैद्यकोक्तेः गर्भस्य मातुश्च एकहृदयत्वात् मातॄणां संचिन्तनमेव गर्भाणां संचिन्तनमित्यभिप्रेत्योक्तम् । अतो न कश्चिद्विरोधः । ईदृशस्य किं निमित्तमित्यत्राह—चञ्चच्चण्डोरुतुण्डत्रुटितफणिवसारक्तपङ्काङ्कितास्यं चञ्चता ग्रासग्रसनाच्चलता चण्डेन निशिततरशिखरतया कुलिशवत् क्रूरेण उरुणा विस्तीर्णेन तुण्डेन चञ्चुपुटेन त्रुटितानां खण्डितानां फणिनां नागानां वसाया मेदसो रक्तस्य रुधिरस्य च पङ्केन पङ्कवत् सान्द्रेण द्रवेण अङ्कितं चिह्नितं कदाचिदप्यरहितमास्यं मुखं यस्येति फणिविषयं वैरानुबन्धमाह । रौद्रश्च रसोऽत्र ध्वन्यते । 'छन्दोमयं वेदप्रकृतिकम्' 'सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनुर्वामदेव्यं बृहद्रथन्तरे पक्षौ' इत्यादिश्रुतेः वेदस्यैव भगवद्धारणे सामर्थ्यमिति भावः । खगपतिं पक्षिराजत्वेन जगदनुग्रहाय वालखिल्यानां तपसा प्रादुर्भूतम् । अमलस्वर्णवर्णम् अग्निना बहुशः शोधितत्वात् श्यामिकारहितस्य काञ्चनस्येव स्निग्धारुणोज्ज्वलः वर्णः शरीरकान्तिर्यस्येति प्रकृतिभूतो वर्ण उच्यते । तत्तत्फलविशेषकामनया पञ्चवर्णत्वादीनामध्यस्तत्वात् । यथा जलदनीलस्य वासुदेवस्य सितपीतरक्तवर्णादिध्यानविशेष इति न कश्चिद्विरोधः । 'हेमपत्रप्रभा-

जालं गगने च वितन्वता ' इति रघुवंशोक्तेश्च । सुपर्णम्, शोभनं पर्णं पक्षो यस्येति सुरमुनिविहितं गौणं नाम प्रतिपादयन् सकलसुरबलसहचरितवलमथनकरतुलितकुलिशशिखरपतनमपि तृणवदविगणयदमृतहरणविहरणविजितगगनचरनिवहमतुलमस्य वैभवमनुस्मारयति कविः । वन्दे शरीरेण प्रणमामि वाचा स्तौमि च इत्यर्थः । मनःप्रावण्यं त्वर्थात्सिद्धमेव, तत्पूर्वत्वात् सर्वप्रवृत्तीनाम् । अत्र सूक्ष्मम् अप्रस्तुतप्रशंसा पर्यायोक्तं च अलंकाराः, सूक्ष्मार्थप्रकाशनात्, गर्भपतनकार्यमुखेन कारणस्य क्रौर्यस्य प्रकाशनात्, फणिकुलवैरस्य पर्यायेण प्रतिपादनाच्च ॥ ६ ॥

'तं त्वौपनिषदं पुरुषं पृच्छामि,' 'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यादिवचनैर्वेदस्यैव सम्यग्ज्ञानसाधनत्वात् तत्सिद्धये छन्दोमयं शकुन्तराजमुपास्य इदानीं भगवन्मूर्तिरूपं परमगुरुरूपं भगवन्तमनन्तमुपास्ते—

**विष्णोर्विश्वेश्वरस्य प्रवरशयनकृत्सर्वलोकैकधर्ता**
**सोऽनन्तः सर्वभूतः पृथुविमलयशाः सर्ववेदैश्च वेद्यः ।**
**पाता विश्वस्य शश्वत्सकलसुररिपुध्वंसनः पापहन्ता**
**सर्वज्ञः सर्वसाक्षी सकलविषभयात्पातु भोगीश्वरो नः ॥**

विश्वस्य सर्वस्य जगतः ईश्वरः स्वामी तस्य। प्रवरशयन-कृत्, मण्डलीकृतेन स्वभोगमण्डलेनोत्कृष्टतल्पनिर्माता। अ-थवा 'शीङ् स्वप्ने' इति धात्वर्थाश्रयणात् प्रशस्तनिद्रासुख-जनकः, शय्यात्वेनेत्यर्थात्। अनिद्रस्य भगवतो निजस्वरूपा-नुसन्धानस्य निद्रात्वेन नाटितत्वात् प्रवरत्वम्, 'एकार्णवे ततस्तस्मिन् शेषशय्यास्तृते प्रभुः। ब्रह्मरूपधरः शेते भगवा-नादिकृद्धरिः' 'आत्ममायामयीं दिव्यां योगनिद्रां समाश्रितः। आत्मानं वासुदेवाख्यं चिन्तयन् परमेश्वरम्' इति श्रीविष्णु-पुराणवचनात्। विश्वेश्वरस्य प्रवरशयनकृदित्यनेन— आधे-यानुगुण्येन ह्याधारेण भवितव्यम्। अतस्तद्वहने को-ऽन्यः प्रगल्भते? इति द्योत्यते। सर्वलोकैकधर्ता, सर्वस्य चतुर्दशसंख्याकस्य भुवनस्य एकः असहायो धर्ता धा-रक इत्यनेन कुक्षिनिक्षिप्तजगदण्डस्य पुण्डरीकाक्षस्य धा-रणे शक्तिः प्रकाश्यते। 'आदिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः' इति कुमारसंभवोक्तेः। प्रवरशयनकृत् सर्वलोकैकधर्तेत्याभ्यां विशेषणाभ्यामनन्यश-क्ययोर्द्वयोः कार्ययोर्युगपदनुष्ठाने निरायासत्वं ध्वन्यते। अन्तः परिच्छेदः तद्रहितोऽनन्तः इति यौगिकेन नामपदेन देश-कालवस्तुपरिच्छेदराहितत्वमाह। सर्वभूतः, अपरिच्छिन्न एव लीलया सर्वं परिच्छिन्नं जगत् भूतः जातः सर्वभूतः। न तु

सर्वीभूतः इति, अभूततद्भावाभावात् । सदात्मन्यसतः प्रपञ्चस्य अध्यस्तत्वात् सत एव शिष्यमाणत्वम्, शुक्तिशकलस्येवेति ध्वन्यते । 'ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्ननु वस्तुभूतः । अतो हि शैलाब्धिधरादिभेदाञ्जानीहि विज्ञानविजृम्भितानि' इति वचनात् । पृथुविमलयशाः लोकविस्तीर्णं सकललोकवलक्षभूतं च यशः कीर्तिर्यस्य सः; पृथुतरयशसेति वा पाठः । इत्थंभूतलक्षणे तृतीया । सर्ववेदैः चतुर्भिरागमैः 'सहस्रशीर्षा पुरुषः' इत्यादिवचनैः वेद्यः । अन्यैः प्रमाणैरवेद्यस्वरूप इत्यर्थः, 'तं त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेः । 'वेदैश्च सर्वैरहमेव वेद्यः' इति भगवद्वचनाच्च । विश्वस्य लोकस्य शश्वत् सदा पाता रक्षिता । रक्षित्रन्तराभावात् शश्वद्ग्रहणम् । तत्र हेतुः सकलसुररिपुध्वंसनः, समस्तानामसुराणां प्रलम्बचाणूरमुष्टिकधेनुकादीनां नाशनः, कर्तरि ल्युट् । अथवा 'फणामणिसहस्रेण यः स विद्योतयन् दिशः । सर्वान् करोति निर्वीर्यान् हिताय जगतोऽसुरान्' इत्युक्तप्रकारविशिष्टः । पापहन्ता, कीर्तनश्रवणादिना पातकान्निवर्तकः । 'अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव' इत्यादिपुराणवचनात् । सर्वज्ञः सर्वं जानातीति 'इगुपधज्ञाप्रीकिरः कः' इति कः । पतञ्जल्यादिरूपेण जगति ज्ञानप्रतिष्ठापनात् । सर्वसाक्षी, सर्वस्य शुभाशु-

भस्य कर्मणः साक्षादीक्षिता ; अनिरुद्धदृक्, स्वरूपेण सदा जागरूकत्वात् 'यः सर्वज्ञः सर्ववित्' 'साक्षी चेता केवलो निर्गुणः' इत्यादिश्रुतिवचनैः। सकलविषभयात्, विपूर्वात् षोऽन्तकर्मणीत्यस्मात् कप्रत्यये विषशब्दसिद्धिः। अतो विशेषेण हन्तीति विषम्— कालकूटादि ; ततो यद्भयमुद्वेगः तस्मात् निमित्तात् पातु रक्षतु इति ऐहिकफलप्रार्थना। 'भीत्रार्थानां भयहेतुः' इति पञ्चमी। सकलग्रहणात् कालकूटादिभ्योऽपि क्रूरात् संसारविषभयात् पात्विति परलोकसुखप्रार्थना। मुक्तिं ददात्वित्यर्थः। तत्र हेतुः भोगीश्वर इति। भोगिनां नागानां स्वामी। अतस्तक्षकादिभ्यो भयं न संभवति। तेषां तदधीनवृत्तित्वात्। भोगी परमसुखानुभवपरः पालनैकशीलो वा ईश्वरः परब्रह्मरूपश्च। अतः संसारभयमपि नाशयितुं शक्त इत्यर्थः। भोगः सर्पाणां शरीरं फणा वा, तद्वन्तो भोगिनः, सौख्यविशिष्टाश्च। 'भोगो रा ये गृहे सौख्ये पालनाभ्यवहारयोः। फणे देहे च सर्पस्य' इति वैजयन्ती। अत्र परिकरोऽलंकारः॥ ७॥

इत्थं भगवन्तमनन्तमुपास्य इदानीं सकलपुरुषार्थकल्पवल्लीं जगन्मातरं महामायारूपां भगवतीं मङ्गलदेवतामुपास्ते—

**वाग्भूगौर्यादिभेदैर्विदुरिह मुनयो यां यदीयैश्च पुंसां**
**कारुण्यार्द्रैः कटाक्षैः सकृदपि पतितैः संपदः स्युः समग्राः ।**
**कुन्देन्दुस्वच्छमन्दस्मितमधुरमुखाम्भोरुहां सुन्दराङ्गीं**
**वन्दे वन्द्यामशेषैरपि मुरभिदुरोमन्दिरामिन्दिरां ताम् ॥**

वाक् शब्दब्रह्मात्मिका सरस्वती । भूः सर्वभूतप्रकृतिः पृथ्वी । गौरी परशक्तिरूपा पार्वती । आदिशब्दात् रतितुष्टिपुष्टिकान्तिस्वाहास्वधादिसंग्रहः । एवंप्रकारनानात्वविशिष्टतया मुनयः महर्षयः विदुः जानन्ति । 'अर्थो विष्णुरियं वाणी श्रीर्भूमिर्भूधरो हरिः । शंकरो भगवाञ्छौरिर्गौरी लक्ष्मीर्द्विजोत्तम । देवतिर्यङ्मनुष्येषु पुंनामा भगवान्हरिः । स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम्' इत्यादिपुराणवचनात्, 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादिश्रुतेश्च । तथा च अम्बास्तवे— 'दाक्षायणीति कुटिलेति कुहारिणीति कात्यायनीति कमलेति कलावतीति । एका सती भगवती परमार्थतोऽपि संदृश्यसे बहुविधा ननु नर्तकीव' इति । यदीयैः यस्याः संबन्धिभिः 'त्यदादीनि च' इति वृद्धसंज्ञा । 'वृद्धाच्छः' इति छः । चकारः पूर्ववाक्यार्थसमुच्चये । पुंसां पुरुषाणामित्यर्थान्तरसंक्रमितवाच्येन ध्वनिना पुराकृतसुकृतशालित्वभक्तिमत्वादिकं द्योत्यते । कारुण्यार्द्रैः, कृपया

शीतलैरित्यनेन प्रत्युपकारनिरपेक्षं स्वत एव भक्तानुग्रहपरत्वं व्यज्यते। कटाक्षैः नेत्राञ्चलैः। 'अपाङ्गे तारविक्षेपः कटाक्ष इति कथ्यते' इति भावप्रकाशः। सकृत् एकवारम्। अपिशब्दो विरोधद्योतकः। लोके सकृत्पतितानां जलदधारादीनां बीजाङ्कुरादिनिष्पादनशक्त्यदर्शनादेतेषां त्वनुपमेयोऽचिन्त्यः प्रभाव इति भावः। पतितैः शरीरलग्नैः। संपदः समृद्धयः। बहुवचनेन तासां बाहुविध्यमाह। कुलीनत्वादीनां तत्त्वज्ञानपर्यन्तानां संपत्त्वात् 'स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान्। स शूरः स च विक्रान्तो यं त्वं देवि निरीक्षसे' इत्यादिवचनैः। समग्राः, प्रत्येकं निरवधिकाः एकत्र समुदिताश्च। स्युः भवेयुरिति संभावनायां लिङ्। तत्र नानुपपत्तिरित्यर्थः। कुन्देन्दुस्वच्छमन्दस्मितमधुरमुखाम्भोरुहां कुन्दपुष्पवत् धावल्यात् इन्दुवत् प्रभाबाहुल्यात् स्वच्छेन निर्मलेन दशनप्रभाणां प्रसरात् मन्देन उत्तमाङ्गनास्वाभाव्यादनुद्धतेन स्मितेन हासेन स्मिञ् ईषद्धसने इति धात्वर्थत्वेऽप्यत्यधिक इति प्रयोगवत्, मधुरम् अविकृतं सदा प्रसन्नमित्यर्थः, 'अनुल्बणत्वं माधुर्यम्' इति वचनात्। मुखमेवाम्भोरुहं तामरसं यस्याः, सौकुमार्यसौरभ्यादिगुणयोगात्। सुन्दराङ्गीं सुन्दराणि अङ्गानि यस्याः। 'अन्यूनानतिरिक्तं यदङ्गप्रत्यङ्गसौष्ठवम्। सुश्लिष्टसन्धिबन्धं

यत्तत्सौन्दर्यमिति स्मृतम्' इति भावप्रकाशः । अङ्गग्रहणं प्रत्यङ्गोपलक्षणार्थम्, 'अङ्गं शिरः कटी वक्षः कुक्षिः पादावितीरितम् । जङ्घोरुबाहुग्रीवादि प्रत्यङ्गमिति कथ्यते । उपाङ्गं नासिकानेत्रभ्रूकपोलाधरादिकम्' इति वचनात् । सुन्दराङ्गीमित्यनेन परब्रह्मरूपस्य भगवत इव तच्छक्तिरूपाया देव्या अपि भक्तिज्ञानध्यानपूजनाद्यर्थं लीलागृहीतविग्रहत्वं प्रकाश्यते। अशेषैः सर्वैः; अपिरभिव्याप्तौ। वन्द्याम् उपासयितुं योग्याम्; सर्वेषामपि सुखार्थित्वात् सुखस्य परदेवताप्रसादमन्तरेणाभावात् इति भावः। मुरभिदुरोमन्दिरां मुराख्यमसुरं विदारितवानिति भगवान्, तस्य उरः वक्षःस्थलं मन्दिरं नियतं निवासगृहं यस्याः। 'दक्षिणस्तनाद्धर्मः' इति श्रीभागवतवचनात्; धर्मोत्पत्तिस्थानतया भगवदुरसः, श्रियश्च धर्मेणैव रक्षणीयत्वादिति भावः। मुरभिदुरोमन्दिरामित्यनेनैतदप्याह यच्छक्तिमत्परतन्त्रत्वाच्छक्तेर्भर्तृवशवर्तिनीत्वाच्च धर्मपत्न्याः उभयथापि भगवत्प्रसाद एव देव्युपासकानामपि फलप्रद इति, 'तेषां हि प्रार्थितं सर्वं मत्प्रसादाद्भविष्यति' इति विष्णुपुराणवचनात् । इन्दिरां लक्ष्मीम् । 'इदि परमैश्वर्ये' इत्यस्मादौणादिक इरप्रत्ययः । परमैश्वर्यस्वभावेति गौणी संज्ञा। 'इन्दिरा लोकमाता मा क्षीरोदतनया रमा' इत्यमरः । अत्र प्रथमे पादे सूक्ष्मं स्वभावोक्तिश्च, द्वितीये अतिशयोक्तिः, तृतीये उपमारूपके,

चतुर्थे प्रस्तुतप्रशंसा च अलंकारः । अनुप्रासस्तु सर्वत्रानुवर्तत इति तत्र तत्र नोद्भाव्यते ॥ ८ ॥

'अथ काठिन्यवान्यो बिभर्ति जगदशेषतः । शब्दादिसंश्रयो व्यापी तस्मै भूम्यात्मने नमः' इत्यादिवचनात् भगवत एव धारशक्तिरूपां भगवतीं भूतधात्रीं प्रतिष्ठासौख्यलाभायोपास्ते —

**या सूते सत्त्वजालं सकलमपि सदा संनिधानेन पुंसो**
**धत्ते या तत्त्वयोगाच्चरमचरमिदं भूतये भूतजातम् ।**
**धात्रीं स्थात्रीं जनित्रीं प्रकृतिमविकृतिं विश्वशक्तिं विधात्रीं**
**विष्णोर्विश्वात्मनस्तां विपुलगुणमयीं प्राणनाथां प्रणौमि ॥**

सत्त्वानां द्रव्याणां समूहम् । 'सत्त्वोऽस्त्री जन्तुषु क्लीबे व्यवसाये पराक्रमे । आत्मभावे पिशाचादौ द्रव्ये सत्तास्वभावयोः । प्राणे बलेऽन्तःकरणे' इति वैजयन्ती । सकलं शरीरादिरूपं घटादिरूपं च । अपिर्व्याप्तौ । सदा सूते प्रवाहरूपेण नित्यं जनयति । तत्र हेतुः पुंसः पुरुषस्य नारायणस्य संनिधानेन व्याप्तत्वात् संनिधिः सत्तामात्रेणेति निर्विकारत्वमीश्वरस्योक्तम् । जलदसंनिधौ यथा बलाका गर्भं धत्ते,

अयस्कान्तसंनिधौ यथा चायश्चेष्टते, एवमेव पदार्थस्वाभाव्यात् एतत्संनिधौ प्रकृतिः सृष्ट्यादिभिश्चेष्टते इत्यर्थः । लोके पितरमन्तरेण मातुः प्रसवशक्त्यदर्शनात्, 'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् । संभवः सर्वभूतानां ततो भवति भारत । सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः । तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता' इति भगवद्वचनात् । अत्र ब्रह्मशब्देन प्रकृतिरुच्यते, भूमेश्च प्रकृतिरूपत्वात्, 'क्षेत्रबीजसमायोगात् संभवः सर्वदेहिनाम्' इति मनुवचनाच्च । ननु पञ्चीकरणाख्यसंयोगविशेषविशिष्टानां पञ्चानामपि भूतानां कार्यं प्रति कारणत्वसाम्येऽपि कथं 'या सूते' इति भूमेः प्रसवं प्रति प्रधानकारणत्वमुच्यते? 'पञ्चभूतात्मकैर्भावैः पञ्चभूतात्मकं वपुः । आप्याय्यते यदि ततः पुंसो भोगोऽत्र किंकृतः' इत्याद्याप्तवचनात् । उच्यते— अमूर्तस्याकाशस्य तावदवकाशदानेनैव परिचितत्वात्, पवनदहनसलिलानां तु प्रेरणार्द्रीकरणमात्रोपयुक्तत्वात् पृथिव्या एवोपादानत्वं काठिन्यगुणयोगात् धारशक्तिश्च तस्या एवेति सैव प्रधानमिति वैद्यकादिषु स्थापितत्वात् । अत्र च मूलप्रकृतिरूपत्वेन देवतायाः स्तुतौ तात्पर्यान्न कश्चिद्विरोधः । 'इयं हि भूमिर्भूतानां शाश्वती योनिरुच्यते' इति मनुवचनं च अत्र प्रमाणम् । 'यामाहुः सर्वभूतप्रकृति

रिति' इति तन्मूलमहाकविवचनाच्च । धत्ते आधारशक्तिरूपेणापतनाय धारयतीत्यर्थः । तत्त्वयोगात् महदादिपृथिव्यन्तानि त्रयोविंशतितत्त्वान्यनुप्रविश्येत्यर्थः, कारणस्य कार्येष्वनुवृत्तेः । अथवा तत्त्वस्य परमार्थभूतस्य परमेश्वरस्य योगात् अनुप्रवेशात् । 'गामाविश्य च भूतानि धारयाम्यहमोजसा' इति भगवद्वचनाच्च । अथवा पुंस इति प्रस्तुतत्वात् तच्छब्देनेश्वरः परामृश्यते । तस्य भावस्तत्त्वं तस्य योगात् संबन्धात् भगवदभिन्नत्वादित्यर्थः । 'नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी । यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम' इति श्रीविष्णुपुराणवचनात् । 'यथा शिवस्तथा देवी यथा देवी तथा शिवः । नानयोरन्तरं विद्याचन्द्रचन्द्रिकयोरिव' इति श्रीवायवीये, 'अनन्या राघवेणाहं भास्करेण प्रभा यथा' इति श्रीरामायणे चोक्तेः । चरं जङ्गमं मनुष्यादिकम् । अचरं स्थावरं वृक्षादिकम् । इदमिति पूर्वं स्मृतत्वेनोक्तम् । अथवा प्रत्यक्षगोचरस्याभिनयः । भूतये पुरुषस्य भोगमोक्षस्वरूपायै संपदे, 'वत्सवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य पुरुषस्य कार्यहेतोः प्रवर्तते तद्वदव्यक्तम्' इति सांख्योक्तेः । सृष्टस्य स्थितये या सूते धत्ते इत्युभयत्रापि हेतुत्वेन संबध्यते । भूतजातं द्रव्यसमूहं भूतशब्दस्य प्राण्यप्राणिसाधारणत्वात् 'भूतानां प्राणिनः श्रेष्ठाः' इति वचनात् । धात्रीं धारणे

पोषणे च समर्थाम्। स्थात्रीं स्थितिशीलाम्। कार्येषु नश्यत्स्वपि कारणरूपेणानश्वरामिति यावत्, 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतेः। जनित्रीं कार्यरूपेण विवर्तमानाम्। अथवा णिजर्थोऽन्तर्भूतः। ततश्च जनयित्रीं मातरमित्यर्थः। 'बीजं पिता क्षेत्रमियं जनित्री' इति महाभारतप्रयोगात्। प्रकृतिं मूलकारणभूताम्। अत एवाविकृतिं कदाचिदपि कार्यत्वमनुभवन्तीं स्वव्यतिरिक्तप्रकृत्यन्तराभावात्। तदभ्युपगमे च अनवस्थानात्। अत एव हि मूलप्रकृतिरिति सांख्योक्तिः। विश्वशक्तिं विश्वस्य सर्वस्य वस्तुनोऽग्न्यादेः शक्तिमौष्ण्यादिकं सामर्थ्यम् 'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः' इति श्रीविष्णुपुराणवचनात्। 'त्वं चन्द्रिका शशिनि तिग्मरुचौ रुचिस्त्वं त्वं चेतनासि पुरुषे पवने बलं त्वम्। त्वं स्वादुतासि सलिले शिखिनि त्वमूष्मा निःसारमेतदखिलं त्वदृते यदि स्यात्' इत्यम्बास्तवे चोक्तम्। विधात्रीं विधिर्नियमनं तत्कर्त्रीम्। तत्पदार्थधर्मासंकरणकारणभूतां नियतशक्तिमित्यर्थः। 'ज्योतींषि यद्दिवि चरन्ति यदन्तरिक्षं सूते पयांसि यदहिर्धरणीं च धत्ते। यद्वाति वायुरनलो यदुदर्चिरास्ते तत्सर्वमम्ब तव केवलमाज्ञयैव' इत्यम्बास्तवोक्तत्वात्। विष्णोः सर्वव्याप्तत्वेन वेदान्तप्रतिपाद्यस्य परब्रह्मण इत्यर्थः। तस्यैव भक्तानुग्रहाय विश्वात्मनः अवल-

म्बितस्थूलरूपस्येत्यनेन प्राणनाथत्वोपपत्तिः । विपुलगुणमयीम्, विस्तीर्णैः रूपशीलादिभिः प्रचुराम् । प्राचुर्यार्थे मयट् । अथवा विपुला अनुजातत्वादसंकुचिता गुणाः सत्त्वादय एव रूपं यस्यास्ताम् । सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरिति लक्षणात् । 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति भगवद्वचनाच्च । स्वसंबन्धिनां गन्धानामनुबन्धिभिश्च शब्दादिभिः पञ्चगुणामित्यपि स्फुरति । प्राणनाथाम्, प्राणानामीश्वरीम् । स्थितिकर्तुर्भगवतो जगद्धारणेन परमसाहाय्यकरणात् सर्वथा हृदयानुवृत्तेश्च परमप्रेमास्पदभूतामित्यर्थः । प्रणौमि प्रकर्षेण स्तौमि । प्रकर्षश्च कायमनसोः प्रह्वीभावः । अतो वाङ्मनःकायैरुपासे इत्यर्थः सिध्यति । 'णु स्तुतौ' इति धातुः । अत्र च कदाचित् पायान्न इति कदाचित् वन्दे इति कदाचित् प्रणौमीत्यादिक्रियाविशेषप्रयोगः भक्तिरसावेगेन भगवदनुसंधाने परमहृदयस्य प्रयोक्तुः संभ्रमवशाद्दिति मन्तव्यः । एवंविधे च स्थले प्रक्रमभेदः प्रत्युत सहृदयचमत्कारकारीति गुण एव । 'शास्त्राणां विषयस्तावद्यावन्मन्दरसा नराः । रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रमः' इति वात्स्यायनोक्तत्वात् । अत्र परिकरोऽलंकारः, विशेषणानां साभिप्रायत्वात् ॥ ९ ॥

इत्थं शङ्खराजादिकं भूमिदेव्यवसानमन्तरङ्गं परमेश्वरस्य

परिवारवर्गमुपास्य तदनुग्रहप्रकाशितेऽन्तःकरणे मणिमुकुर इव प्रतिबिम्बितं भगवन्तमुपासितुमुपक्रममाणः प्रणयिजनकल्पपादपयोः श्रीपादयोः संबन्धिनः पांसूनुपास्ते—

**येभ्योऽसूयद्भिरुच्चैः सपदि पदमुरु त्यज्यते दैत्यवर्गै-**
**र्येभ्यो धर्तुं च मूर्ध्ना स्पृहयति सततं सर्वगीर्वाणवर्गः ।**
**नित्यं निर्मूलयेयुर्निचिततरममी भक्तिनिघ्नात्मनां नः**
**पद्माक्षस्याङ्घ्रिपद्मद्वयतलनिलयाः पांसवः पापपङ्कम् ॥**

येभ्योऽसूयद्भिः यद्विषयेषु गुणेषु दोषाविष्करणरूपामसूयां कुर्वद्भिः, 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' इति चतुर्थी । सकलमङ्गलप्रसावकान् पुरुषोत्तमपांसून् शिरसा वहेति गुर्वादिभिरुपदिष्टे सति दुष्टतया तदवधीरयद्भिरित्यर्थः । यथा ऋषिणा भगवदाराधनं प्रति याच्यमानेन वेनेन जल्पितम् 'मत्तः कोऽभ्यधिकोऽन्योऽस्ति कश्चाराध्यो ममापरः । कोऽयं हरिरिति ख्यातो यो वै यज्ञेश्वरो मतः' इति । यथा प्रह्लादेन भगवति स्तूयमाने हिरण्येन प्रलपितम् 'कोऽयं विष्णुः सुदुर्बुद्धे यं ब्रवीषि पुनः पुनः' इत्यादि, तथेत्यर्थः । उच्चैः उन्नतम्, इन्द्रादिभिरपि समग्रैश्वर्यतया उपास्यत्वात् । 'स संचरिष्णुर्भवनान्तरेषु यां यदृच्छयाशिश्रियदाश्रयः श्रियः। अकारि तस्यै मकुटोपरि स्खलत्करैस्त्रिसन्ध्यां त्रिदशैर्दिशे नमः' इत्युक्त्वा-

त्। उरु विस्तीर्णम्, त्रैलोक्यविभवसामग्र्यात्। पदं सार्वभौमत्वाद्यधिकारः। दैत्यवर्गैः असुरसमूहैः सपदि त्यज्यते तत्क्षणमेव मुच्यते, भ्रष्टश्रीकत्वात्— यथा वेनहिरण्यादिभिः। येभ्योऽसूयद्भिरित्युक्तेरनसूयद्भिर्भक्तैर्दैत्यैरपि महत्त्वं प्राप्यते इति वैधर्म्येण प्रतीयते, प्रह्लादविभीषणादिषु तथा दर्शनाच्च। मूर्ध्ना धर्तुं शिरसा धारयितुम्। तानिति सामर्थ्यात्सिध्यति। 'आदाय शुक्तिषु वलाहकविप्रकीर्णै रत्नाकरो भवति वारिभिरम्बुराशिः' इति मुरार्युक्तवत्। येभ्यः स्पृहयति यान् प्राप्तुमिच्छति। 'स्पृह ईप्सायाम्' इति चौरादिकः। 'स्पृहेरीप्सितः' इति चतुर्थी। सर्वगीर्वाणवर्गः सर्वः समस्तः गीर्वाणानां देवानां वर्गः समूहः। सर्वशब्देन ब्रह्मादीनामपि संग्रहः। सततं स्पृहयतीत्यनेन तेषामपि कृच्छ्रलभ्यत्वं ध्वन्यते, 'देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः' इति भगवद्वचनात्। 'बर्हिर्मुखाः क्रतुभुजो गीर्वाणा दानवारयः' इत्यमरः। चकारो वाक्यार्थसमुच्चये। नित्यम्, सर्वदा भक्तिनिघ्नात्मनामित्यन्वयः। क्षणे क्षणे भगवदनुस्मरणेन पुलककुम्भस्तम्भबाष्पाम्भःसंभारसूचितविवशहृदयानामित्यर्थः। 'निघ्नः परवशः स्मृतः' इति हलायुधः। नित्यं भक्तिनिघ्नात्मनामित्यनुवादमुखेन विशिष्टा प्रार्थना क्रियते। 'नित्यं त्वच्चरणारविन्दयुगलध्यानामृतास्वादिनामस्माकं

सरसीरुहाक्ष सततं संपद्यतां जीवितम्' इति मुकुन्दमालोक्तवत् । निचिततरं जन्मान्तरसहस्रेषु भृशं संचितम् । अमी पुरतोऽनुभूयमानाः । पद्माक्षस्य तत्कालविकसिततरुणारुणकमलवत् विपुलायतस्निग्धमुग्धारुणशीतलसुभगत्वादिविशिष्टे अक्षिणी यस्य । अङ्घ्रिपद्मद्वयतलनिलयाः पद्मवत् कोमलारुणयोरङ्घ्र्योश्चरणयोः युगस्य तलं उदरः निलयः आश्रयः येषाम्, पांसवः रेणवः प्रणमदमरमौलिमालालग्नाः कुसुमपरागाः कमलाकरकमलसंगेन सक्ताः, कर्पूरपट्टिकादिरेणवो वा, अन्यथा भगवतो नारायणस्य पादयोर्धरणिरेणुस्पर्शस्यानुपपत्तेः । पापपङ्कं दुष्कर्मरूपं कर्दमम् । सन्मार्गसंचरणविरुद्धत्वादन्तःकरणसलिलकलुषीकरणान्मालिन्याच्च पङ्कत्वारोपः । निर्मूलयेयुः निरस्तमूलं कुर्युरिति प्रार्थनायां लिङ् । तत्करोतीति णिच् । पांसूनां लोके पङ्कशोषणसामर्थ्यदर्शनात् पापपङ्कनिर्मूलनप्रार्थनेति मन्तव्यम् । 'संसाराब्धिं पिबेयुर्वः कंसारेः पादपांसवः' इत्याद्यैरब्धिशोषणसामर्थ्यं पांसूनां प्रकाशितम्, पङ्कशोषणसामर्थ्यं किं पुनः । अत्र च लघीयांसोऽपि महदाश्रयवशात् दुष्करं कार्यं साधयितुं प्रभवन्तीति वस्तु व्यज्यते । रूपकमलंकारः पापे पङ्कत्वारोपणात् ॥

अथ पांसुभ्योऽन्तरङ्गभूता रेखा उपास्ते—

**रेखा लेखादिवन्द्याश्चरणतलगताश्चक्रमत्स्यादिरूपाः
स्निग्धाः सूक्ष्माः सुजाता मृदुललिततरक्षौमसूत्रायमाणाः।
दद्युर्नो मङ्गलानि भ्रमरभरजुषा कोमलेनाब्धिजायाः
कम्रेणाम्रेड्यमानाः किसलयमृदुना पाणिना चक्रपाणेः ॥**

रेखाः वलयः । लेखादिवन्द्याः देवैरुपास्याः । 'आदितेया दिविषदो लेखा अदितिनन्दनाः' इत्यमरः । चरणतलगताः पादोदरवर्तिन्यः । चक्रमत्स्यादिरूपाः चक्रं रथाङ्गं मत्स्यो मीनः आदिशब्दात् सृणिकुलिशदण्डकोदण्डपुण्डरीकादिग्रहणम्; तत्संनिवेशविशिष्टाः, तेषां महापुरुषलक्षणत्वात्; 'दण्डाङ्कुशौ चक्रचापौ श्रीवत्सं कुलिशं तथा । मत्स्यश्चैतानि चिह्नानि कल्प्यन्ते चक्रवर्तिनाम्' इति सामुद्रोक्तेः । स्निग्धाः अरूक्षवर्णाः । सूक्ष्माः तनुतराः । सुजाताः सौष्ठवात् व्यक्ताः । मृदुललिततरक्षौमसूत्रायमाणाः सुकुमारसुन्दरतराणि क्षौमसूत्राणि त्रसरतन्तव इवाचरन्तः; तत्तुल्या इत्यर्थः । 'कर्तुः क्यङ् सलोपश्च' इति क्यङ् । दद्युः दिशेयुः । मङ्गलानि द्वयोरपि लोकयोः श्रेयांसीति द्योतयति । भ्रमरभरजुषा आरुण्यसौरभ्यसौकुमार्यरूपसाम्यादियोगात् तत्कालविकसितारुणतामरससंभ्रमनिलीनमधुकरकुलं सेवत इति भ्रमरभरजुट् 'जुषी प्रीतिसेवनयोः' इत्यस्मात् क्विप् ।

तेन भ्रमरभरजुषेत्युक्तिः । पाणेश्चरणयोर्निजभरेण म्लानत्वशङ्कया संकोचं द्योतयति । कोमलेन मार्दवेन; मृदुललितकोमलस्वच्छधीरादयः शब्दा गुणे गुणिनि च वर्तन्ते । शनैःशनैराम्रेड्यमाना इति संबन्धः । अनेन भगवच्चरणयोर्मार्दवातिशय उक्तः । धर्मपरत्वमन्तरेण धर्मिपरत्वेन व्याख्याने किसलयमृदुनेति पौनरुक्त्यप्रङ्गात्, मृदुत्वकोमलत्वयोः पर्यायत्वात् । अब्धिजायाः अब्धौ समुद्रे जातेत्यब्धिजा; 'सप्तम्यां जनेर्डः' इति डप्रत्ययः । तस्याः श्रियः । कम्रेण सुन्दरेण । किसलयमृदुना पल्लवसुकुमारेण । पाणिना करतलेन आम्रेड्यमानाः 'आम्रेडनं द्विस्त्रिरुक्तम्' इत्यमरः । लक्षणया पुनःपुनः संस्पृश्यमाना इत्यर्थः । चरणकमलयोः संवाहने हि नान्तरीयकतया तद्गतानां रेखानामपि संवाहनं भवतीति कृत्वा रेखानामाम्रेडनमुक्तम् । चक्रपाणेश्चरणतलगता रेखा नः अस्माकं मङ्गलानि दद्युरित्यन्वयः । अत्रोपमा अतिशयोक्तिश्चालंकारः ॥ ११ ॥

अथ 'चरणं पवित्रम्' इत्यादिश्रुतिभिः 'यत्पादसंश्रयात्सूत मुनयः प्रशमायनाः' इति, 'न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजः प्रपन्नाः' इति, 'भवत्पदाम्भोरुहनावमत्र ते निधाय याताः सदनुग्रहो भवान्' इत्यादिभिः स्मृतिभिश्च भक्तपरित्राणं प्रति शेषाङ्गेभ्यः प्रधानभावं तु

यथोः प्रकाशैरिति भगवतः श्रीपादौ त्रिभिः श्लोकैरुपास्ते—

**यस्मादाक्रामतो द्यां गरुडमणिशिलाकेतुदण्डायमाना-**
**दाश्च्योतन्ती बभासे सुरसरिदमला वैजयन्तीव कान्ता ।**
**भूमिष्ठो यस्तथान्यो भुवनगृहबृहत्स्तम्भशोभां दधौ नः**
**पातामेतौ पयोजोदरललिततलौ पङ्कजाक्षस्य पादौ ॥**

द्यामाक्रामतः वामनरूपेण विरोचनसुतात् बलेः पदत्रये याचिते भगवतस्तत्क्रमणारम्भसमये इत्यर्थः । आक्रामत इति, न त्वाक्रान्तवत इति । तत्रा ब्रह्मलोकं गतस्य ब्रह्मणा निजकमण्डलुजलैरभिषिच्यमानस्य तत्क्षण एव सुरसरित्प्रादुर्भावात् उत्प्रेक्षया उपपत्तिः । ततः अण्डकटाहमपि भित्त्वा ऊर्ध्वं गतस्य कुत उत्प्रेक्षावकाश इति द्योत्यते । 'तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे । नभः प्रक्रममाणस्य नाभ्यां किल यदास्थितौ । दिवमाक्रममाणस्य जानुभ्यां तौ व्यवस्थितौ । विष्णोरमितवीर्यस्य वदन्त्येव द्विजातयः' इति हरिवंशोक्तेः । गरुडमणिशिलाकेतुदण्डायमानात्, 'गारुत्मतं मरकतमश्मगर्भं हरिन्मणिः' इत्यमरः । मरकतरूपया शिलया निर्मितः । क्यङ् । यस्मादपादानात् आश्च्योतन्ती क्षरन्ती । सुरसरित् देवनदी गङ्गा । अमला

शुद्धधवलवर्णा । कान्ता नीलधवलवर्णयोर्योगे परभागलाभा-द्दर्शनीया । वैजयन्ती ध्वजपटीव । 'वैजयन्ती पताकायां जयन्त्यां केशवस्रजि' इति वैजयन्ती । बभासे अशोभिष्ट । भक्तानां सकलमङ्गलार्थमुक्तमभितः सपटीको ध्वजस्तम्भ इवेति । भूमिष्ठः भूमण्डलं क्रान्त्वा स्थितः 'अम्बाम्ब-गोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्भ्यः स्थः' इति षत्वम् । तथेति वृत्तानुपूर्वत्वादिगुणातिदेशः । अन्यः पूर्वोक्तादपरः । भुवनगृहबृहत्स्तम्भशोभां ब्रह्माण्डमण्डपस्य यो महान् समग्रभरसहः स्तम्भः स्थूणादण्डः तस्य शोभां तत्सदृशीं कान्तिमित्यर्थः । दधौ धारयति स्म । अत्रान्यस्य शोभामन्यः कथं वहतीति तत्सदृशीं शोभामिति निदर्शना यद्यप्युपमा परिकल्प्यते, तथाप्यर्थगतिपर्यालोचनया पुनरु-त्प्रेक्षायां पर्यवस्यति । भगवत्पदस्यैव तथाविधस्तम्भत्वे-नोत्प्रेक्ष्यमाणत्वात् । न हि स्तम्भस्तथाविधः कश्चित् पूर्वं प्रसिद्धः ; येनोपमीयेत । केतुदण्डायमानादित्यन्यत्रापि न्याय एषोऽनुसन्धेयः । एतौ यस्मादिति य इति च यच्छब्दद्व-येन परामृष्टयोरेकदा समं परामर्शः । 'यश्चाधर्मेण वि-ब्रूयात् यश्चाधर्मेण पृच्छति । तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति' इत्यादिप्रयोगात् । पयोजोदरललिततलौ पद्माभ्यन्तरवत् मृदुतलौ पङ्कजाक्षस्य पुण्डरीकसदृशनयनस्य

पादौ । नः पाताम् अस्मान् रक्षेताम । 'पा रक्षणे' इत्यस्माल्लोटि प्रथमपुरुषद्विवचनमिदम एताविति इत्थंभूतयोः पादयोर्ग्रहणं तदानीं तयोर्जगदनुग्रहाय प्रबुद्धनिजप्रभात्वात् रक्षणस्य सुकरतां द्योतयितुम् । उपरितनश्लोकेऽप्ययमर्थोऽनुसन्धेयः । उत्प्रेक्षा निदर्शना च अत्राप्यलंकारः ॥

**आक्रामद्भ्यां त्रिलोकीमसुरसुरपती तत्क्षणादेव नीतौ**
**याभ्यां वैरोचनीन्द्रौ युगपदपि विपत्संपदोरेकधाम ।**
**ताभ्यांताम्रोदराभ्यांमुहुरहमजितस्याश्चिताभ्यामुभाभ्यां**
**प्राज्यैश्वर्यप्रदाभ्यां प्रणतिमुपगतः पादपङ्केरुहाभ्याम् ॥**

त्रिलोकीं भूम्यन्तरिक्षस्वर्गात्मकं लोकत्रयसमाहारम् । आक्रामद्भ्यां समन्तान्मिमानाभ्याम् । असुरसुरपती वैरोचनीन्द्रौ यथासंख्यमसुराणां पतिर्वैरोचनिः बलिः, 'विरोचनश्च प्रह्लादाद्बलिर्जज्ञे विरोचनात्' इति पुराणवचनात् । सुराणां पतिरिन्द्रश्च । 'अल्पाच्तरम्' इति इन्द्रशब्दस्य पूर्वनिपाते प्राप्ते त्रैलोक्यैश्वर्यादिन्द्रात् समग्रैश्वर्यपरमधार्मिकस्य वैरोचनेः अभ्यर्हितत्वद्योतनार्थं पूर्वनिपातः । विशेषणेन सपक्षसहितयोर्निग्रहानुग्रहावाह । आक्रामद्भ्यामिति शत्रा प्रारम्भं सूचयन तत्क्षणादेवेत्यप्रतीकारत्वबुद्धिं प्रकाशयति । नीतौ प्रापितौ ।

युगपत् तुल्यकालम् । अपिर्भिन्नक्रमः । विपत्संपदोरपीति संबन्धः । विपदः असमग्रैश्वर्यरूपाया आपदः, संपदस्तद्विपर्ययरूपायाः समृद्धेरपि । एकधाम परां काष्ठाम । ताम्रोदराभ्याम् अरुणतलाभ्याम् । मुहुः अनुक्षणम् । अजितस्य विष्णोः, 'जय जय जह्यजामाजित दोषगृभीतगुणाम' इत्यादिपुराणवचनात् । अञ्चिताभ्याम अविशेषेण सर्वैः पूजिताभ्याम् । द्विवचनेन द्वित्वे सिद्धेऽपि उभाभ्यामिति संख्याग्रहणं वक्ष्यमाणसंख्याधिक्यकटाक्षीकारेण पूर्वं प्रकृतिभूताद्वित्वविषयप्रावण्यद्योतनार्थम् । प्राज्यैश्वर्यप्रदाभ्यां प्रकृष्टमीश्वरत्वं भगवद्भावमेव प्रदातुं समर्थाभ्याम् । 'प्रे दाज्ञः' इति कः । पादपङ्केरुहाभ्यां मुहुः प्रणतिमुपगतः अनुक्षणं प्रकृष्टां नतिं मनोवाक्कायप्रावण्यं प्राप्तोऽस्मीत्यर्थः । 'नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च' इति चतुर्थी । अत्र विशेषो विरोधश्चालंकारः, त्रिलोक्याक्रमणेन प्रस्तुतेन विपत्संपद्रूपवस्त्वन्तरकरणात् युगपद्विरुद्धकार्यकरणाच्च ॥ १३ ॥

अथोपासनाभेदात् फलभेदं प्रापयंस्तावेवावस्थाभेदात् बहुत्वं प्राप्तावुपास्ते—

**येभ्यो वर्णश्चतुर्थश्चरमत उदभूदादिसर्गे प्रजानां**
**साहस्री चापि संख्या प्रकटमभिहिता सर्ववेदेषु येषाम् ।**

**प्राप्ता विश्वंभरा यैरतिविततनोर्विश्वमूर्तेर्विराजो**
**विष्णोस्तेभ्यो महद्भ्यः सततमपि नमोऽस्त्वङ्घ्रिपङ्केरुहेभ्यः ॥**

येभ्योऽपादानभूतेभ्यश्चतुर्थो वर्णः शूद्राख्यः 'वर्णाः स्युर्ब्राह्मणादयः' इत्युक्तक्रमेण ब्राह्मणक्षत्रियविशाख्यानां चतुर्थत्वात् वर्णत्रये मुखबाहूरुभ्य उद्भूते पश्चादित्यर्थः । उदभूत् उद्भूतः । उदभूदित्यनेन संकल्पमात्रादनायासेनाविर्भूतत्वं ध्वन्यते, 'सिद्धार्थः सिद्धसंकल्पः' इति वचनात् । अव्यक्तं जायते चास्य मनसा यद्यदिच्छति । वशीकृत्वा तु त्रैगुण्यात् साकाङ्क्षत्वात् स्वभावतः' इति वायुवचनात् । प्रजानामादिसर्गे महाप्रलयावसाने कल्पस्य प्रथमकृतयुगारम्भे ब्रह्मादिकर्तृकसर्गात् पूर्वं भगवत्कर्तृकजगन्निर्माणकाल इत्यर्थः, 'चतुर्युगान्यशेषाणि सदृशानि स्वरूपतः । अन्यं कृतयुगं मुक्त्वा मैत्रेयान्त्यं तथा कलिम् । आद्ये कृतयुगे सर्गः क्रियते ब्रह्मणा यतः । क्रियते चोपसंहारस्तथान्त्ये च कलौ युगे' इति श्रीविष्णुपुराणवचनात् । 'वर्णत्रयशुश्रूषया धर्मस्थापनादनायासधर्मार्जनत्वात् शूद्रः साधुः' इति व्यासादिमहर्षिभिः स्तुतस्य तुरीयवर्णस्योत्पत्तिस्थानकथनं भगवत्पादानां स्तुतित्वेन परिणमति । 'पद्भ्यां शूद्रो अजायत' इति श्रुतेः । तत्र पद्भ्यामिति द्विवचनप्रयोगेऽपि प्रकृ-

तिभूतपादद्वयविकृतितः विलक्षणादन्येषां येभ्य इति बहुवचनप्रयोगः । कथं बहुत्वमवगम्यते इत्यत्राह— साहस्रीति, सहस्रपरिमिता 'तपःसहस्राभ्यां विनीनौ, अण् च' इत्यण् । चकारः अपिवत् समुच्चयार्थः । संख्या गणना प्रकटं स्पष्टं लिङ्गवाक्यादिव्यतिरेकेण श्रुत्यैव साक्षादित्यर्थः । अभिहिता उक्ता । सर्ववेदेषु ऋग्यजुःसामाख्ये वेदत्रये 'सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात्' इत्यादिवचनैः । पुरुषसूक्तस्य सर्ववेदेषु साम्यात् सर्ववेदेष्वित्युक्तिः । 'उद्धृतासि वराहेण कृष्णेन शतबाहुना' इति मन्त्राच्च । विश्वंभरा भूमियैर्व्याप्ता सर्वतः समाक्रान्ता । अतिविततनोः स्थूलरूपेण विवृत्तस्य । कथं विवृत्तत्वमित्यत्राह— विश्वं चराचरभूतविशिष्टं ब्रह्माण्डं मूर्तिर्विग्रहो यस्य । तदानीं विराजः विविधं राजतो विराट्संज्ञस्य हिरण्यगर्भस्येत्यर्थः । 'हिरण्यगर्भः समवर्तताग्रे' इति श्रुतेः । 'सहस्रसंख्यैर्गगनं शिरोभिः पादैर्भुवं व्याप्य वितिष्ठमानम् । विलोचनस्थानगतोष्णरश्मिनिशाकरं साधु हिरण्यगर्भम्' इति माघोक्तेः । विष्णोरिति विशेष्यनिर्देशः । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इति श्रुतेः व्याप्तस्य अरूपस्य परमात्मन इति अनेन लीलाविग्रहत्वं प्रकाश्यते, 'अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममा-

यया' इति भगवद्वचनात्, 'समस्तशक्तिरूपाणि तत्क-
रोति महामते । देवतिर्यङ्मनुष्याख्याश्चेष्टावन्ति स्वलीलया'
इति श्रीविष्णुपुराणवचनाच्च । महद्भयः सकलपुरुषार्थप्रसा-
वकतया प्रत्युपक्रियानिरपेक्षपरोपकारैकनिरतेभ्यः भगवदनपे-
क्षया स्वातन्त्र्येण भक्तानुग्राहकेभ्यश्च । भगवतस्तु पादप्रणा
मसापेक्षतयैवोपकारकत्वात् 'अवाप्तव्यान्यपास्तानि यस्य स-
र्वाणि देहिनः । परोपकारव्यसनी स महात्माभिधीयते'
इति भावप्रकाशः । विश्वंभराख्यात्वैवाकारमहत्त्वस्योक्त-
त्वात् । सततं सर्वदा । अपिरभिव्याप्तौ । नमः प्रणामः
अस्तु अविच्छिन्नसत्ताकं वर्तताम् । अङ्घ्रिपङ्केरुहेभ्यः पाद-
पद्मेभ्यः । 'नमःस्वस्ति' इत्यादिना चतुर्थी । अत्र स्वभावो-
क्तिरलंकारः ॥ १४ ॥

'पातालमेतस्य हि पादमूलम्' इत्युक्तेः पातालरूप पाद-
द्वयमुपास्य इदानीं पादद्वयस्याङ्गिन अङ्गभूताः प्रसङ्गात् पाता-
लप्रदेशविशेषभूताः अङ्गुलीरुपास्ते—

**विष्णोः पादद्वयाग्रे विमलनखमणिभ्राजिता राजते या**
**राजीवस्येव रम्या हिमजलकणिकालंकृताग्रा दलाली ।**
**अस्माकं विस्मयार्हाण्यखिलजनमनःप्रार्थनीयानि सेयं**
**दद्यादाद्यानवद्या ततिरतिरुचिरा मङ्गलान्यङ्गुलीनाम् ॥**

पादद्वयस्य पादयोर्द्वयस्य अग्रे विमलनखमणिभ्राजिता विशुद्धैर्नखरूपैः रत्नैः मुक्तामणिभिरित्यर्थः, भ्राजिता दीप्ता, 'भ्राजृ दीप्तौ' इति धातुः । राजते शोभते, 'राजृदीप्तौ' इति धातुः । राजीवस्य पद्मस्य, अग्रे इत्यर्थादायाति, पादद्वयाग्रे इत्युक्तेः । तत्रापि द्वयस्येति वक्तव्ये समासो गमकत्वात् कृतः । 'बिसप्रसूनं राजीवं कमलम्' इत्यमरः । रम्या कालविकासेन हृद्या । हिमजलकणिकालंकृताग्रा हिमजलस्य शीकरैर्भूषितान्यग्राणि यस्याः । दलाली पत्राणां पङ्क्तिः, 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः' इत्यमरः । विस्मयार्हाणि, अहो अस्य सुकृतपरिणतिः—इति सर्वेषामाश्चर्यबुद्धियोग्यानि । अखिलजनमनःप्रार्थनीयानि सर्वेषां जनानां मनोभिरेषणीयानि । मनोग्रहणेन 'मनोरथानामगतिर्न विद्यते' इति न्यायात् दुर्लभेऽपि वस्तुनि मनःप्रवृत्तेस्तथाविधत्वमेतेषां द्योत्यते । सा यच्छब्देन परामृष्टा अनुभूयमाना । आद्या आदौ भवा भगवन्मूर्तेरनादित्वात् । अनवद्या अवद्यमप्रशस्तं लक्षणमन्योन्यन्यूनातिरिक्तत्वादि तद्रहिता । अतिरुचिरा । उक्तलक्षणविशिष्टतया अत्यन्तं मनोहरा । मङ्गलानि अभ्युदयानि श्रेयःसाधनानि अङ्गुलीनां ततिः पादशाखानामावलिः । अत्र दृष्टान्तोऽलंकारः, पादद्वयाङ्गुलीनखमणीनां राजीवदलालीहिमजलकणिकानां च बिम्बप्रतिबिम्बभावेन निर्देशात् ॥१५॥

'अश्वाश्वतर्युष्ट्रगजा नखानि' इत्युक्तेस्तद्रूपां नखालीमुपास्ते—

**यस्यां दृष्ट्वामलायां प्रतिकृतिममराः संभवन्त्यानमन्तः**
**सेन्द्राः सान्द्रीकृतेर्ष्यास्त्वपरसुरकुलाशङ्कयातङ्कवन्तः ।**
**सा सद्यः सातिरेकां सकलसुखकरीं संपदं साधयेन्न-**
**श्चञ्चच्चार्वंशुचक्रा चरणनलिनयोश्चक्रपाणेर्नखाली ॥**

अमलायां स्फटिकमुकुरवत् स्वच्छरूपायामिति स्फुटप्रतिबिम्बालम्भे हेतुः। स्वां प्रतिकृतिं स्वशब्देन अमराः परामृश्यन्ते। आत्मसंबन्धीनि प्रतिबिम्बानि 'प्रतिमानं प्रतिकृतिः प्रतिच्छायम्' इति हलायुधः। आनमन्तः नमस्कुर्वाणा इति दर्शने हेतुः। सेन्द्राः इन्द्रेण सहिताः। अमराः देवाः आदित्यवसुरुद्राश्विप्रमुखास्त्रयस्त्रिंशत्कोटिसंख्याः। सान्द्रीकृतेर्ष्याः दर्शनेन बहुलीकृता ईर्ष्या अक्षमा येषाम्; 'अक्षान्तिरीर्ष्या' इत्यमरः। भगवदुपासनायागतानां कथमीर्ष्याप्रसङ्ग इत्यत्राह—तुर्विशेषे; अपरसुरकुलाशङ्कया अस्मद्व्यतिरिक्तं सुराणां देवानां कुलं वंशः कथमत्र वर्तते इत्याशङ्कया चिन्तया। न तु स्वप्रतिकृतिबुद्धिस्तेषामित्यनेन स्पष्टदृष्टत्वात् प्रतिबिम्बबुद्धिः किंचिदपि नोत्पन्नेति भावः। आतङ्कवन्तः भयभूयिष्ठाः 'आतङ्को भयम्' इति वैजयन्ती। भगवच्चरणयोरुपास-

काभीष्टदानव्यसनित्वादेतेषां च तदानीं तत्पादपतितत्वाच्च अस्माकं पदमेतैर्हृतं भविष्यति हन्त हता वयमित्याकुलहृदया भवन्तीत्यर्थः । 'अस्त्येतदन्यसमाधिभीरुत्वं देवानाम्' इति शाकुन्तलोक्तेः । सद्यः स्वध्यानानन्तरमेव सातिरेकाम् अतिरेकः अतिशयः अविशेषात् सर्वेभ्यः संपदन्तरेभ्योऽतिरेकेण सहितामित्यर्थः । तत्र हेतुः सकलसुखकरीं संपूर्णसुखहेतुभूताम्, 'कृञो हेतुताच्छील्यानुलोम्येषु' इति हेतौ टः । संपदन्तराणां दुःखशबलितसुखसाधनत्वात् । संपदं तत्त्वज्ञानसामग्र्यरूपां श्रियम् । तस्या एव निःशेषदुःखनिवृत्तिनिरतिशयानन्दानुभवरूपकैवल्यसाधनत्वात् । साधयेत् निर्विघ्नं पोषयतु । तत्र सामर्थ्यमाह— चञ्चच्चार्वंशुचक्रा प्रसरन्तश्चारवो निर्मलत्वात् मनोहराश्चांशवः किरणाः तेषां चक्रं मण्डलं यस्या इति । 'विशुद्धं सत्त्वमूर्जितम्' इति विशुद्धात्मिकाया भगवन्मूर्तेरवयवत्वात् विशेषतस्तेजोमयत्वाच्च मोहान्धकारनिराकरणेन ज्ञानसंपत्संपादने निरर्गलं सामर्थ्यमस्यास्तीति अनुमानालंकारः । सादृश्याद्वस्त्वन्तरप्रतीतेः तत्कार्यस्य भयादेश्च प्रतिपादनात् ॥ १६ ॥

अथ पादपृष्ठभागपर्यायम् 'पार्ष्णिप्रपदे रसातलम्' इत्युक्तेः रसातलत्वेनोपास्यं प्रपदद्वयमुपास्ते—

पादाम्भोजन्मसेवासमवनतसुरव्रातभास्वत्किरीट-
प्रत्युप्तोच्चावचाश्मप्रकरकरगणैश्चित्रितं यद्विभाति ।
नम्राङ्गानां हरेर्नो हरिदुपलमहाकूर्मसौन्दर्यहारि-
च्छायं श्रेयःप्रदायि प्रपदयुगमिदं प्रापयेत्पापमन्तम् ॥

पादाम्भोजन्मनोः चरणसरसिजयोः सेवायै उपासनार्थं समवनतस्य सम्यक्कृतनमस्कारस्य सुरव्रातस्य देवसमूहस्य भास्वत्सु जाम्बूनदमयत्वेन दीप्तेषु किरीटेषु मकुटेषु प्रत्युप्तानां न्यस्तानाम्, रत्नन्यासस्य प्रत्युप्तत्वप्रसिद्धेः 'तस्योल्लसत्काञ्चनकुण्डलाग्रप्रत्युप्तगारुत्मतरत्नभासा' इत्यादिप्रयोगात् । उच्चावचानां नानाविधवर्णसंस्थानजातिभेदानाम् 'उच्चावचं नैकभेदम्' इत्यमरः । अश्मनां रत्नानां प्रकरस्य संघातस्य कराः किरणाः तेषां गणैः संचयैः चित्रितं संजातलेखं विभाति, तद्विशिष्टत्वेन शोभत इत्यर्थः । अथवा द्योतकशून्योत्प्रेक्षया चित्रितामिव भातीत्यर्थः । नम्राङ्गानां भक्तिवशात् स्वयमेव नमनशीलं शरीरं येषाम् । नः अस्माकम् । हरिदुपलं मरकतशिला ; 'गारुत्मतं मरकतमश्मगर्भं हरिन्मणिः' इति वैजयन्ती ; तेन निर्मितः उरुः कच्छपः हरिदुपलमहाकूर्मः तस्य सौन्दर्यं कान्तिं हर्तुं चोरयितुं शीलं यस्याः सा ; 'छायानातपशोभयोः' इति वैजयन्ती । कूर्मशब्देनात्र कूर्मपृष्ठकपालमौचि-

त्याल्लक्ष्यते । कूर्मपृष्ठवत् वृत्तोत्तुङ्गमसृणमित्यर्थः । 'प्रपदाजितकच्छपात्' इत्यादिप्रयोगात् कूर्मग्रहणम् । श्रेयःप्रदायि स्मरणादिभिर्लोकद्वयसुखप्रदानशीलम् । हरेः भक्तानामातङ्कहरणात् हरिशब्दवाच्यस्य भगवतः, 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते । तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' इत्यादिस्मृतेः । प्रपदयुगं पादयोः पृष्ठभागद्वयम्; 'प्रपदं चरणाग्रम्' इति वैजयन्ती । इदं यच्छब्देन यत्परामृष्टं तदिदमित्यर्थः । प्रापयेत् गमयतु । पापं वाङ्मनःकायोपार्जितं दुष्कर्म कर्मभूतम् । अन्तम् अवसानं प्रापयेत् पुनरनुत्थानाय विलापयेत् इति प्रार्थनायां लिङ् । 'अन्तोऽस्त्र्यवसिते मृत्यौ' इति वैजयन्ती । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इति गत्यर्था द्विकर्मकाः । अत्र पूर्वार्धे उत्प्रेक्षा उत्तरार्धे निदर्शनालंकारः । अत्र च 'पार्ष्णिप्रपदे रसातलम्' इति वचनात् गुल्फयोश्च तदङ्गभूतत्वात् 'महातलं विश्वसृजोऽस्य गुल्फौ' इत्युक्तत्वात् प्रपदोपासनेनैव पार्ष्णिगुल्फयोरुपासनं कृतमिति वेदितव्यम् ॥ १७ ॥

अथ क्रमप्राप्तं 'तलातलं वै पुरुषस्य जङ्घे' इति स्मृतं जङ्घाद्वयमुपास्ते—

**श्रीमत्यौ चानुवृत्ते करपरिमलनानन्दहृष्टे रमायाः**
**सौन्दर्याढ्येन्द्रनीलोपलरचितमहादण्डयोः कान्तिचोरे ।**

**सूरीन्द्रैः स्तूयमाने सुरकुलसुखदे सूदितारातिसंघे**
**जङ्घे नारायणीये मुहुरपि जयतामस्मदंहो हरन्त्यौ ॥**

श्रीशब्देनात्र समुदायशोभा उच्यते । श्रिया सर्वप्रकारया कान्त्या नित्ययुक्ते । नित्ययोगे मतुप् । तस्यार्थस्य प्रपञ्चनमुपक्रियते । चकारो वाक्यार्थान्तरसमुच्चये । जङ्घे च जयतामित्यन्वयः । अनुवृत्ते पूर्वभागानुसारेण वर्तुलाकारे; 'वृत्तं च वर्तुलम्' इत्यमरः । 'वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे उभे सृष्टवतस्तदीये' इति कुमारसंभवोक्तेः। चारुवृत्ते च इत्यर्थः। रमायाः पद्मवासिन्याः। करपरिमलनं हस्ताभ्यां संवाहनं तज्जनितेनानन्दसुखानुभवेन हृष्टे रोमाञ्चिते । सौन्दर्याढ्येन निर्दोषतया समग्रगुणतया च शोभया पूर्णेन इन्द्रनीलोपलेन महानीलाख्यरत्नविशेषेण रचितयोः निर्मितयोः दण्डयोः यष्ट्योः कान्तिचोरे शोभाया मोषिके, वृत्तायतस्निग्धस्थूलनीलमसृणत्वादिगुणयोगात् । सूरीन्द्रैः ज्ञानिश्रेष्ठैः सनकादिभिः स्तूयमाने प्रशस्यमाने । तत्र हेतुः सुरकुलसुखदे सुरशब्दः सात्त्विकजनोपलक्षणार्थः । सुराणां कुलस्य वंशस्य सुखं दातुं शीलं ययोः । तत्र हेतुः सूदितारातिसघे सूदिताः शीघ्रं धावित्वा निर्दयाघातैर्मारिताः अरातीनां धर्मद्रुहां संघाः समूहा याभ्याम्। जङ्घे जानुगुल्फयोरन्तरालप्रदेशौ 'प्रसृते जा-

नुनी जङ्घे' इति वैजयन्ती । नारायणीये जलशायिनो भगवतः संबन्धिन्यौ । 'वृद्धाच्छः' इति छः । 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः' इति स्मृतेः । नारः नरसमुदायः तस्य अयनम् आश्रयः इत्युक्तरीत्या परमात्मा वा नारायणः । मुहुः क्षणेन अनुक्षणं वा; 'मुहुः क्षणेऽनुक्षणे च' इति वैजयन्ती । शीघ्रमस्मदंहः अस्मत्संबन्धि दुरितं हरन्त्यौ; 'अंहो दुरितदुष्कृते' इत्यमरः । वाङ्मनःकायैर्बुद्धिपूर्वमबुद्धिपूर्वं वा क्रियमाणमनुक्षणं हरन्त्याविति वा । क्षणेन हरन्त्याविति तत्कालविशेषणं वा विशिष्टस्यैव प्रार्थना । जङ्घे अपि जयतां सर्वोत्कर्षेण वर्तताम् । लोटि परस्मैपदप्रथमपुरुषद्विवचनम् । अत्र स्वभावोक्तिर्निदर्शना च अलंकारः ॥ १८ ॥

अथ 'ऊरुजङ्घान्तरालवर्तिनी जानुनी सुतलं विश्वमूर्तेः' इत्याद्युक्तं जानुद्वयमुपास्ते—

**सम्यक्साह्यं विधातुं सममिव सततं जङ्घयोः खिन्नयोर्ये**
**भारीभूतोरुदण्डद्वयभरणकृतोत्तम्भभावं भजेते ।**
**चित्तादर्शं निधातुं महितमिह सतां ते समुद्गायमाने**
**वृत्ताकारे विधत्तां हृदि मुदमजितस्यानिशं जानुनी नः ॥**

सम्यक् समीचीनमिति विधानक्रियाविशेषणम् । सम्यक्त्वं च खिन्नतया सहायापेक्षसमये प्रवृत्तत्वात् । साह्यं सहभावमित्यर्थः । विधातुं कर्तुम् । समं तुल्यमिति क्रियाविशेषणम् । सततं नित्यम् । खिन्नयोः तान्तयोः अर्थादूरुभारवहनाद्धेतोः । भारीभूतोरुदण्डद्वयभरणकृतोत्तम्भस्य भावस्तत्त्वम् । गुरुत्वात् भारीभूतस्य दुर्वहत्वं प्राप्तस्य ऊरुदण्डद्वयस्य भरणार्थं वहनार्थं कृतस्योत्तम्भस्य भावं तत्त्वम् । उत्तम्भो नाम गृहादिधारणार्थस्य महास्तम्भस्यानवसादार्थोऽवान्तरस्तम्भः । भजेते प्राप्नुतः । चित्तादर्शं मनोरूपं मुकुरं स्वच्छतया भगवत्तत्त्वप्रतिबिम्बधारत्वादादर्शस्य रूपणम् । निधातुं निक्षेप्तुम् । महितं पूजितम्, विषयाभिषङ्गकलङ्कराहित्यात् । इह काले । सतां योगिनाम् । अथवा इह अजिते । समुद्गायमाने समुद्गवदाचरती ; 'समुद्गः संपुटः पुटः' इति वैजयन्ती । द्विरददन्तादिनिर्मितः सपिधानो भूषणादिनिधानार्थो भाजनविशेषः समुद्गः । वृत्ताकारे वर्तुलसंस्थाने इत्युत्प्रेक्षाहेतुः । अजितस्य भगवतः जानुनी ऊरुजङ्घान्तराले; पर्वफलके 'जानुरष्ठीवदस्त्रियाम्' इति वैजयन्ती । अस्माकं हृदि हृदये । मुदं हर्षम । स्वानुभूत्या विधत्तां कुर्वताम्, 'विपूर्वो धाञ् करोत्यर्थे' इति वचनात् । लोटि परस्मैपदप्रथमपुरुषद्विवचनमिदम् । अत्र पूर्वार्धे उत्प्रेक्षा स्पष्टैव । उत्तरार्धे 'उपमानादाचारे, कर्तुः क्यङ्सलोपश्च'

इत्युपमार्थपर्यालोचने उत्प्रेक्षायां पर्यवस्यति, वृत्ताकारत्वहेतुना चित्तादिनिधानसाधनत्वेनोत्प्रेक्ष्यमाणत्वात् । सदा सज्जनहृदयस्य तत्र धार्यमाणत्वं च व्यज्यते ॥ १९ ॥

अथ 'ऊरुद्वयं वितलं चातलं च' इत्युक्तमूरुद्वयमुपास्ते—

**देवो भीतिं विधातुः सपदि विदधतौ कैटभाख्यं मधुं चा-**
**प्यारोप्यारूढगर्वावधिजलधि ययोरादिदैत्यौ जघान ।**
**वृत्तावन्योन्यतुल्यौ चतुरमुपचयं बिभ्रतावभ्रनीला-**
**वूरू चारू हरेस्तौ मुदमतिशयिनीं मानसे नो विधत्ताम् ॥**

देवः नारायणः, भीतिं भयम्, विधातुः ब्रह्मणः, सपदि झटिति अचिन्तितोपगतं व्यसनमसहायस्य भयातिशयहेतुरित्यर्थः । विदधतौ कुर्वाणौ, 'तदा द्वावसुरौ घोरौ विख्यातौ मधुकैटभौ । विष्णुकर्णमलोद्भूतौ हन्तुं ब्रह्माणमुद्यतौ' इति पुराणवचनात् विधातृभीतिविधानोक्तिः । कैटभाख्यं कैटभ इति आख्या नामपदं यस्य, मधुं मधुसंज्ञं च, आदिदैत्यौ सर्वेषां दैत्यानामादिभूतौ विष्णुकर्णमलोद्भूतत्वेऽपि तयोर्दैत्यत्वोक्तिरसुरपर्यायत्वेन दैत्यशब्दस्य प्रसिद्धिविवक्षया, न तु दित्यपत्यत्वादिति ज्ञेयम् । आरूढगर्वौ बलपराक्रमातिशयेन सम-

न्तात् प्रकाशितस्वकार्यतया निरतिशयो दर्पपर्यायो गर्वाख्यो भावो ययोः; 'प्रीतिनिर्वृतिनिघ्नानामरागविषयेऽपि यः। प्रवृत्तिं कुरुते भावः पुंसां दर्पः स उच्यते' इति दिवाकरः। अधिजलधि जलधौ प्रलयसमुद्रे इत्यर्थः। ययोरारोप्य हठादाकृष्य स्थापयित्वा जघान हिंसितवान्। 'आपज्जहि न यत्रोर्वी सलिलेन परिप्लुता' इति ताभ्यां प्रार्थितेन 'तथेत्युक्त्वा भगवता शङ्खचक्रगदाभृता। कृत्वा चक्रेण वै छिन्ने ऊरुस्थे शिरसी तयोः' इति पुराणवचनमनयोक्तिभङ्ग्यानुस्मारयति कविः। अन्योन्यतुल्यौ परस्परेण सदृशाविति तृतीयसब्रह्मचारिनिवृत्त्यर्थमुक्तिः। चतुरं विदग्धं अन्यूनानतिरिक्तत्वात् अनुपूर्वत्वाच्च उपचयं बिभ्रतौ दधानौ। अभ्रनीलौ मेघवदाकाशवद्वा श्यामवर्णौ। चारू प्रशस्तलक्षणविशिष्टतया मनोहरौ। हरेः ऊरू मानसे हृदये। अतिशयिनीं भगवद्विग्रहानुभूत्यतिरिक्तस्य सुखहेतोरभावात् परां कोटिमधिरूढाम्। अत्र परिकरोऽन्योन्यं च अलंकारः, विशेषणानां साभिप्रायत्वात् अन्योन्यस्य उपमानोपमेयभावाच्च ॥ २० ॥

अथ 'महीतलं तज्जघनं महीपते' इत्युक्तं भगवतो जघनमण्डलमुपास्ते—

पीतेन द्योतते यच्चतुरपरिहितेनाम्बरेणात्युदारं
जातालंकारयोगं जलमिव जलधेर्बाडबाग्निप्रभाभिः।

**एतत्पातित्यदान्नो जघनमतिघनादेनसो माननीयं**
**सातत्येनैव चेतोविषयमवतरत्पातु पीताम्बरस्य ॥**

पीतेन कनकमयत्वेन हारिद्रवर्णेन 'वासस्तु सन्ध्या नृपवर्य भूम्नः' इति भागवतोक्तेः सन्ध्यात्वानुसंधानाय पीतत्वोक्तिः। द्योतते दीप्यते। चतुरपरिहितेन विदग्धं यथा तथा संवीतेन। अम्बरेण वाससा। अत्युदारम् अतिशयेन मनोहरम्। जातालंकारयोगं जातः संभूतः अलंकारेण अलंकृत्या योगः संबन्धो यस्य। भावसाधनः अत्रालंकारशब्दः शोभामात्रवाचकः। बाडबाग्निप्रभाभिः बडबामुखाग्निद्युतिभिः । जलधेर्जलमिवेत्युपमया विपुलनीलस्निग्धत्वादि जघनस्य व्यज्यते। पातित्यदात्, श्रुतिस्मृतिविहितस्य स्ववर्णाश्रमानुगुणस्य कर्मणो विधिपूर्वकमनुष्ठानं निषिद्धस्य च अननुष्ठानं द्वयात् परिभ्रश्य निरयतमसि पतितत्वात् पतित इत्युच्यते, तस्य भावः पातित्यम्, तत् ददातीति पातित्यदात्। तत्र हेतुः अतिघनात् अतिशयेन सान्द्रात्। अतिशयत्वं च महतः पातकस्य बुद्धिपूर्वमनुष्ठानात् अनुतापाच्च प्रायश्चित्तस्यायोग्यत्वम्। अबुद्धिपूर्वत्वे अनुतापस्यैव प्रायश्चित्तता 'अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः' इति मनुवचनात् 'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः। अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणान्'

इति याज्ञवल्क्यवचनाच्च । एनसः पापात् । माननीयं सर्वलोकैः पूज्यम्, ब्रह्माण्डस्यैवोत्पादकत्वात्; 'अप एव ससर्जादौ तासु वीर्यमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्' इति स्मृतेः । 'काञ्चीपदं कलत्रं च कटिः श्रोणिः ककुद्मती । पुरोभागोऽस्य जघनं नितम्बोऽपरभागतः' इति वैजयन्ती । अत्र जघनशब्दोऽपरभागस्याप्युपलक्षणपरः । नितम्बस्य पृथगनभिधानात् । एनसः पातु रक्षतु । 'भीत्रार्थानां भयहेतुः' इति अपादानत्वम् । रक्षणं च पूर्वजन्मार्जितस्य अस्मिन् जन्मनि प्रामादिकस्य च निरसनेन वा, इतः परं तत्राप्रवर्तनायोपाययोजनेन वा इत्युभयथा भवति । कथमनेन रक्षणं क्रियते इत्यत्राह—सातत्येनेति । सततभावेन नैरन्तर्येणेत्यर्थः । एवकारो भिन्नक्रमः । चेतोविषयं मनसो गोचरम् । अवतरत् अवगाहमानमेवेति हेतौ शता । न प्रकारान्तरापेक्षा । तावन्मात्रेणास्माकं चरितार्थत्वादिति भावः । 'उपपातकेषु सर्वेषु पातकेषु महत्सु च । रजन्याः पादमेकं तु ब्रह्मध्यानं समाचरेत् । अतिपापप्रसक्तोऽपि ध्यायन्निर्विषयोऽच्युतम् । भूयस्तपस्वी भवति पङ्क्तिपावनपावनः । यथाग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम्' 'न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानां पुरु-

षोत्तमे' इत्यादिस्मृतिपुराणादिवचनैः । पीताम्बरस्य पीतं कबलीकृतमम्बरमाकाशं येन, 'आत्मन आकाशः संभूतः' इति श्रुतेः । कारणेन कार्यस्य व्याप्यत्वात् । अम्बरग्रहणं भूतान्तराणामप्युपलक्षणम् । पारम्पर्येण तेषां तत्कार्यत्वात् । अतः सर्वजगद्व्याप्तस्य विष्णोरित्यर्थः । पीतं कपिलवर्णं वसनं यस्येति वा तस्य संबन्धीति । अत्र पूर्वार्धे दृष्टान्तोऽलंकारः, उपमानोपमेयानां बिम्बप्रतिबिम्बभावेन निर्देशात् । उत्तरार्धे अतिशयोक्तिः, चेतोविषयावतरणमात्रेणातिघनदुरितनिरसनसामर्थ्यप्रतिपादनात् ॥ २१ ॥

अथ महीमण्डलात्मनो जघनमण्डलस्य प्रधानमण्डनं समुद्रवेलात्वेन सन्ध्यात्मनो वाससः सावित्र्यात्मना उपास्यकाञ्चीकलापमुपास्ते—

**यस्या दाम्ना त्रिधाम्नो जघनकलितया भ्राजतेऽङ्गं यथाब्धेर्मध्यस्थो मन्दराद्रिर्भुजगपतिमहाभोगसंनद्धमध्यः ।**
**काञ्ची सा काञ्चनाभा मणिवरकिरणैरुल्लसद्भिः प्रदीप्ता कल्यां कल्याणदात्री मम मतिमनिशं कम्ररूपा करोतु ॥**

दाम्ना सूत्रेण, सूत्रप्रोतमणिगणसन्निवेशविशेषरूपत्वात् काञ्च्याः, 'कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा'

इत्यादिवचनैः । 'स्त्रीनपुंसकलिङ्गयोर्दृश्यत्वे दामन् सीमन् प्रभृतयः' इति स्त्रियां गणितत्वात् । 'दामानि सन्तु भुवनेषु परःसहस्रम्' 'दामनि भुवनवनतां प्रपन्ने' इत्यादिप्रयोगात् । त्रिधाम्नः त्रीणि धामानि यस्य जागरस्वप्नसुषुप्त्याख्यानि तत्साक्षित्वात् । 'स्वप्नजागरिते सुप्तिं भावाभावौ धियां तथा। यो वेत्त्यविक्रियः साक्षात् सोऽहमित्यवधारय' इत्याचार्यवचनात्; ऋग्यजुःसामाख्यानि वा 'सर्वे वेदा यत्पदमामनन्ति' इति श्रुतेः सूक्ष्मवेद्यत्वात् । भूर्भुवःस्वराख्यानि त्रिलोकीव्याप्तत्वात् । अथवा त्रीणि धामानि तेजांसि यस्येत्यर्थः । रविशशिदहनाख्यानि 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इति भगवद्वचनात् । तस्य विष्णोः जघनकलितया जघनशब्देन सर्वमेव कटितटं लक्ष्यते तस्मिन् बद्धया तत्परिवेष्टितयेत्यर्थः । अथवा जघने कटीपुरोभागे कृतग्रन्थिबद्धया । भ्राजते दीप्यते । अङ्गं सर्वा मूर्तिः । अब्धेर्मध्यस्थः क्षीरसागरान्तर्वर्ती तन्मथनारम्भे इत्यर्थात् । एतच्च विशेषणं भुजगपतिबद्धमध्यत्वे हेतुत्वेनोपात्तम्, अन्यथा तद्बन्धाभावादुपमानत्वानुपपत्तेः । भुजगपतिमहाभोगसंनद्धमध्यः, सर्पराजस्य वासुकेः महता पूर्वस्मात् सविशेषं गुरुणा, देवकार्यार्थं तदानीं भगवच्छक्त्याप्यायितत्वात्, भोगेन शरीरेण नेत्रीभूतेन

सनद्धः सम्यक् बद्धः मध्यः मेखलाप्रदेशो यस्य । मन्दरो यथा, यथेववाशब्दाः उपमाद्योतकाः । उपमानेनोत्तुङ्गत्वविपुलत्वस्थिरत्वादयो भगवदङ्गस्य प्रकाश्यन्ते, सार्धद्वयलक्षप्रमाणत्वेन भगवन्मूर्तेः पुराणेषु प्रतिपादनात् । काञ्ची, 'स्त्रीकट्यां सप्तकी काञ्ची पुंस्कट्यां शृङ्खला त्रयी' इत्यभिधानेऽपि काञ्चीशब्देनोक्तिरुपचारात्, 'पीतांशुके पृथुनितम्बमधि स्फुरन्त्या काञ्च्यालिभिर्विरुतया वनमालया च' इति पुराणवचनाच्च । काञ्चनाभा मध्ये मध्ये गुलिकाकारेण संनिविष्टजाम्बूनदस्य प्रभया । महार्घाणां रत्नानां च प्रोतानां रश्मिभिः शाबल्येन प्रकर्षादुज्ज्वलद्भिः, अनेन कनकवर्णत्वात् फणामणिघृणिपटलभासुरत्वाच्च वासुकिभोगस्य साम्यसाम्राज्यं प्रतिपाद्यते । उल्लसद्भिः, ऊर्ध्वं प्रसरद्भिः । कल्याणदात्री स्मरणादिभिरभ्युदयनिःश्रेयससाधिका । कम्ररूपा विविधशिल्पकल्पनात् शोभनसंनिवेशा । मम मतिं बुद्धिम् । अनिशं सर्वदा । कल्यां संशयविपर्ययनिरसनेन भगवत्स्वरूपतत्त्वज्ञाने दक्षां करोतु, 'सर्वेषामेव लाभानां प्रज्ञालाभः परः स्मृतः' इति, 'न देवा यष्टिमादाय रक्षन्ति पशुपालवत् । यं यं रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम्' इति च महाभारतोक्तेः । बुद्धिलाभस्य सर्वलाभेभ्यो विशिष्टत्वात् तस्य च भगवत्प्रसादजन्यत्वादिति भावः । प्रार्थने लोट् । दृष्टान्तोऽत्रालंकारः ॥

अथ 'नभःस्थलं नाभिसरो गृणन्ति' इत्युक्तं भगवतो नाभिदेशमुपास्ते—

**उन्नम्रं कम्रमुच्चैरुपचितमुदभूद्यत्र पत्रैर्विचित्रैः**
**पूर्वं गीर्वाणपूज्यं कमलजमधुपस्यास्पदं तत्पयोजम् ।**
**यस्मिन्नीलाश्मनीलैस्तरलरुचिजलैः पूरिते केलिबुद्ध्या**
**नालीकाक्षस्य नाभीसरसि वसतु नश्चित्तहंसश्चिराय ॥**

उन्नम्रम् उत्तुङ्गस्वभावम् । कम्रमुच्चैः अतिशयेन सुन्दरं पद्मान्तरेषु तादृशशोभाभावात् । उपचितं समन्तात् परिवृतं समृद्धं वा । पत्रैः दलैः । विचित्रैः नानारूपैः सप्तद्वीपनवखण्डादिभेदविशिष्टत्वात् । पूर्वम् आदौ भवम् गीर्वाणपूज्यं देवैरर्चनीयम् । तत्र हेतुः कमलजमधुपस्य ब्रह्मरूपस्य भ्रमरस्य भगवत्स्वरूपानुभवरूपपरमरसास्वादनशीलस्य च । विष्णोः पदे परे । आस्पदम् आधारभूतम् । कमलजेत्याद्यास्पदमिति तत एव जातत्वं तदाधारत्वं च आह । अत एव सकलजगत्स्रष्टुरुत्पत्तिस्थानत्वात् गीर्वाणानामपि पूज्यमिति भावः । पयोजत्वान्मधुपरूपणं तत्र स्थितो ब्रह्मा भगवदनुभवानन्दरूपमकरन्दमास्वादयतीति द्योतयितुं मधुपेत्युक्तिः । 'विष्णोः पदे परमे मध्व उत्सः' इति श्रुतेः । आतोऽनुपसर्गे कः । तदभिश्रुतिमूलस्मृ-

तिप्रसिद्धिं प्रकाशयति । तां च अनन्तरश्लोके दर्शयिष्यामः । पयोजम् पद्मं यत्रोदभूत् यस्मिन्नुत्पन्नम् । नीलाश्मनीलैः इन्द्रनीलरत्नवत् नीलवर्णैः । तरलरुचिजलैः चञ्चलैरुपर्युपरि प्रवणताच्छील्यात् स्वभावरूपैः सलिलैः । जलस्य 'यच्छुक्लं तदपाम्' इति श्रुतेः शुक्लवर्णस्वभावेऽपि कालिन्द्यादि-जलवत् नैल्योक्तावपि नानुपपत्तिः । अपह्नुतनिम्नभावे नालीकाक्षस्य नालीकं पद्ममिव अरुणायतविमलशीतमक्षि यस्य । नाभीसरसि नाभिरूपे तटाके चित्तहंसः 'मनस्तु संकल्पविकल्पकारि बुद्धिस्तु संकल्पितनिश्चयात्मा । अहंकृतिर्नाम स योऽभिमानश्चित्तं तु तद्यत्रयमप्यवैति' इत्याचार्यवचनात् चित्तशब्देनात्र मूलान्तःकरणमुच्यते । तद्रूपो हंसः सदसद्विवेचनशीलत्वात् । केलिबुद्ध्या लीलेयमित्यभिप्रायेण न तु यन्त्रणयेत्यर्थः । अनेन च 'या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु' इत्युक्तरीत्या भोग्यविषयविरक्त्या सातिशयभक्तिरसप्रार्थनां द्योतयति । चिराय वसतु सदा तिष्ठतु । अनया च उक्तिभङ्ग्या धारणासिद्धिं प्रार्थयते । 'गच्छतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः । नापयाति यदा चित्तात्सिद्धान्मन्येत तांस्तदा' इति श्रीविष्णुपुराणवचनात् । अत्र समस्तवस्तुविषयं सावयवरूपकमलंकारः ॥ २३ ॥

अथ प्रसङ्गात्पुण्डरीकरूपं नाभिकमलमुपास्ते—

**पातालं यस्य नालं वलयमपि दिशां पत्रपङ्क्तीर्नगेन्द्रा-**
**न्विद्वांसः केसरालीर्विदुरिह विपुलां कर्णिकां स्वर्णशैलम् ।**
**भूयाद्गायत्स्वयंभूमधुकरभवनं भूमयं कामदं नो**
**नालीकं नाभिपद्माकरभवमुरु तन्नागशय्यस्य शौरेः ॥**

पातालमिति अधोवर्तिनाम् अतलादीनां पातालान्तानां सप्तानां लोकानामुपलक्षणम् । 'अतलं वितलं चैव नितलं च गभस्तिमत् । महच्च सुतलं चान्यत्पातालं चैव सप्तमम्' इति श्रीविष्णुपुराणवचनात् । यस्य नालीकस्य नालं दण्डम् अधोवर्तित्वात् तद्गतानन्ताधारत्वाच्च नालत्वारोपः । दिशां पूर्वादीनां वलयं कर्णिकां परितः स्थितं वर्तुलत्वेन प्रतिभासमानं संस्थानं प्रतिबद्धमध्यमिव दिग्वलयमिति माघोक्तवत् दिक्शब्देनात्र दिग्वर्तिनो देशा उच्यन्ते । पत्रपङ्क्तीः दलावलीः । 'भारताः केतुमालाश्च भद्राश्वाः कुरवस्तथा । पत्राणि लोकपद्मस्य मर्यादालोकबाह्यतः' इति वचनात् भारतभद्राश्वकेतुमालकुरुसंज्ञानि क्रमात् पूर्वदक्षिणपश्चिमोत्तरवर्तीनि चत्वारि वर्षाणि पत्रत्वेन रूप्यन्ते । नगेन्द्रान् पर्वतश्रेष्ठान् केसरालीः किञ्जल्कश्रेणीः 'वीध्यालि-

रावलिः पङ्क्तिश्रेणीलेखास्तु राजयः' इत्यमरः । 'शीतान्तश्च कुमुद्वांश्च कुररी माल्यवांस्तथा । वैकङ्कप्रमुखा मेरोः पूर्वतः केसराचलाः । त्रिकूटः शिखरश्चैव पतङ्गो रुचकस्तथा । निषधादयो दक्षिणतस्तस्य केसरपर्वताः। शिखिवासाः सवैडूर्यः कपिलो गन्धमादनः । जारुधीप्रमुखास्तद्वत् पश्चिमे केसराचलाः । शङ्खकूटोऽथ ऋषभो हंसो नागस्तथापरः । कालाञ्जनाद्याश्च तथा उत्तरे केसराचलाः' इति वचनात् । विपुलां विस्तीर्णा लक्षयोजनोन्नतत्वात् द्वात्रिंशद्योजनविस्तीर्णशिखरत्वाच्च । कर्णिकां बीजकोशं स्वर्णशैलं कनकपर्वतं सुमेरुम्, भूपद्मस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः' इति वचनात् । इह जगत्रये विद्वांसः दिव्येन चक्षुषा प्रत्यक्षीकृतभगवत्तत्त्वाः पराशरपाराशर्यादयः। विदुः जानन्ति । गायत्स्वयंभूमधुकरभवनं प्रशंसासामानि गायतो गीत्या प्रयुञ्जानस्य झङ्कारमुखस्य च स्वयंभूः ब्रह्मा तद्रूपस्य मधुकरस्य भृङ्गस्य वासभूतं कमलजमधुपस्यास्पदमित्यनन्तरोक्तेऽपि पुनस्तद्भवनत्वोक्तिः पूर्वमकथितस्य भगवत्प्रसादनाय प्रयुज्यमानस्य तत्कार्यस्य प्रकाशनार्थेति मन्तव्यम्, 'नाभिप्ररूढाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा' इत्यादिवचनात् । स्वयंभूशब्देन भगवत एव रजोगुणावलम्बनेन जगत्सर्गाय स्वयमेव स्रष्टृरूपेण विवृत्तत्वं कमलजत्वोक्तिस्त्वौपचारिकीति च द्यो-

त्यते । भूमयं पञ्चाशत्कोटिविस्तीर्णधरणीमण्डलात्मकं नालीकं पद्मं नाभिपद्माकरभवं नाभिरूपे पद्मसरसि जातम्, 'यस्याम्भसि शयानस्य योगनिद्रां वितन्वतः । नाभिह्रदाम्बुजादासीत् ब्रह्मा विश्वसृजां पतिः । यस्यावयवसंस्थानैः कल्पितो लोकविस्तरः' इति श्रीभागवतोक्तेः । यस्यावयवेति नाभिह्रदाम्बुजस्य परामर्शः । 'यदम्बु वैष्णवः कायस्ततो विप्र वसुंधरा । पद्माकारा समुत्पन्ना पर्वताब्ध्यादिसंयुता' इति श्रीविष्णुपुराणवचनाच्च । उरु विस्तीर्णं नागशय्यस्य नागः अनन्तः शय्या शयनं यस्य । शौरेः शूरनाम्नो यदुराजस्यापत्यभूतस्य । नागशय्यस्य शौरेरित्यनयोक्त्या भगवान्नारायण एव साक्षात्कृष्णरूपेण प्रादुर्भूतः । न तु कर्मपरतन्त्रतया देवक्यां जात इति सूचयति । 'परब्रह्म नराकृति गूढं परं ब्रह्म मनुष्यलिङ्गं कृष्णस्तु भगवान् स्वयम्' इत्यादिवचनैः । कामान् इष्टान् पुरुषार्थान् ददातीति कामदं भूयादित्याशीर्लिङ् । अत्र समस्तवस्तुविषयसावयवरूपकमलंकारः ॥ २४ ॥

अथावयवयोर्नाभिनलिनयोरवाचीनं क्रोडभागमुपास्ते—

**आदौ कल्पस्य यस्मात्प्रभवति विततं विश्वमेतद्विकल्पैः**
**कल्पान्ते यस्य चान्तः प्रविशति सकलं स्थावरं जङ्गमं च ।**

अत्यन्ताचिन्त्यमूर्तेश्चिरतरमजितस्यान्तरिक्षस्वरूपे
तस्मिन्नस्माकमन्तःकरणमतिमुदा क्रीडतात्क्रोडभागे ॥

कल्पस्य चतुर्युगसहस्रात्मकस्य ब्रह्मदिनस्य आदौ प्रारम्भकाले प्राकृतप्रलयावसानकाले इत्यर्थः । यस्मात् प्रभवति प्रादुर्भवति न तु येन क्रियत इति । अनेन 'निमित्तमात्रमेवासौ सृज्यानां स्वस्वकर्मणि । प्रधानकारणीभूतो ...... वै सृज्यशक्तयः' इति 'यथर्तुष्वङ्ग लिङ्गानि नानारूपाणि पर्यये। वर्तन्ते तानि तान्येव तथा भावा युगादिषु' इत्यादिवचनैः समर्थितं ब्रह्मणो निमित्तत्वमात्रं स्वत एव उत्पत्तिं च प्रकाशयति । महदादितत्त्वात्मना विवर्तते इत्यर्थः । विकल्पैः विविधाभिर्द्रव्यगुणकर्मादिकल्पनाभिः विततं व्याप्तं विश्वं जगत् । एतदित्यभिनयेन दृश्यत्वान्मिथ्यात्वं सूचयति, 'ततः प्रबुद्धो राज्यन्ते पुनः सृष्टिं करोत्यजः' इति वचनात् । कल्पान्ते परसंज्ञस्य ब्रह्मायुषः ब्रह्मदिनस्यावसानकाले इत्यर्थः । अतश्च प्राकृतप्रलयोऽत्र कल्पान्तशब्देनाभिधीयते । न तु नैमित्तिकः सकलं स्थावरं जङ्गमं चेत्यविशेषेण प्रतिपादनात् । कल्पान्तग्रहणेन मध्यकालेऽस्थितमित्यर्थः सामर्थ्याल्लभ्यते, आद्यन्तयोरभावप्रतिपादनात् । शुक्तिरूप्यस्येव मध्यकालेऽप्यज्ञानाप्रतिभातत्वं च प्रकाश्यते, 'आदावन्तेऽपि यन्नास्ति वर्तमानेऽपि तत्तथा'

इत्याचार्यवचनात् । अन्तः अभ्यन्तरे प्रविशति तिरोभवति, 'एवं सप्त महाबुद्धे क्रमात् प्रकृतयः स्मृताः । प्रत्याहारेण ताः सर्वाः प्रविशन्ति परस्परम्' इति पुराणवचनात् । चकारः सर्गसंहारयोरैकाधिकरण्यं द्योतयति । कदल्याः कदाचित् स्वजातेः कदाचित् वेत्रमूलात् उत्पत्तेः । घटस्य कदाचित् कपालेषु कदाचित् चूर्णेषु च नाशस्य दर्शनात् तथा नेत्यर्थः, 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति' इत्यादिश्रुतिभ्यः । सकलं सर्वमेव । स्थावरं स्थितिः गतिनिवृत्तिः तच्छीलम् 'स्थेशभासपिसकसो-वरच्' जङ्गमं भूयो गमनशीलम् । विश्वमिति विशेष्यनिर्देशः । 'यस्माद्विश्वमुदेति' इत्यादिदर्शनात् । अत्यन्ताचिन्त्यमूर्तेः सदसद्भिन्नाभिन्ननित्यानित्यादिरूपेण केनचिदपि प्रकारेणाचिन्त्या निर्वक्तुमशक्या मूर्तिः मायाख्योपाधिर्यस्य । 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इत्याचार्यवचनात् । अथवा भक्तानुग्रहमन्तरेण यत्परिग्रहस्य कारणान्तरं निरूपयितुं न शक्यं सा मूर्तिः विग्रहो यस्येत्यर्थः, 'नाकारणात् कारणाद्वा कारणाकारणान्न च । शरीरग्रहणं व्यापि धर्मत्राणाय केवलम्' इति वचनात् । अन्तरिक्षस्वरूपे आकाशात्मनि 'आकाशमुदरं नाभिरश्मिः' इति सावित्रीहृदये । 'आवपनमाकाशः आकाशे हि सर्वं समाप्यते' इत्यैतरेयोपनिषदि च आम्नानात् कार्यजातं

व्याप्य वर्तमानत्वादाकाशत्वोक्तिः । क्रोडभागे उदरप्रदेशे, 'शय्याधूसरक्रोडरोमराजिषु' इति कादम्बरीप्रयोगात् । अत्र क्रोडशब्देन मूलप्रकृतिर्भगवत उदरत्वेन उच्यते इति गम्यते, तस्यामेव जगत्प्रभवप्रवेशोपपत्तेः । 'अहीन्द्रतल्पेऽधिशयान एकः कृतक्षणश्चात्मरतावहीनः । योऽन्तःशरीरेऽर्पितभूतसूक्ष्मः कालात्मिकां शक्तिमुदीरयानः' इति 'लोकानपीमान्ददृशे स्वदेहे' इति भागवतोक्तेः । 'विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये' इति माघोक्तेः, 'दामोदरो निजोदरगह्वरनिक्षिप्तजगदण्डः' इति वेणीसंहारोक्तेः क्रोडग्रहणम् । अन्तःकरणम् अन्तः चक्षुरादिभ्योऽभ्यन्तरसंकल्पविकल्पात्मकत्वाच्च करणमिन्द्रियं मन इत्यर्थः । अतिमुदा अतिशयितेन हर्षेण भक्तिरसामृतास्वादाच्चिरतरं क्रीडतात् । निर्विघ्नतया निरन्तरं विहरतु 'क्रीडृ विहारे' इति धातुः 'तुह्योस्तातङाशिष्यन्यतरस्याम्' इति आशिषि लोट् । अत्र सूक्ष्मं स्वभावोक्तिर्वा अलंकारः ॥

पूर्वं सात्त्विकरूपेणोपास्य इदानीं विग्रहावयवत्वेन उदरमेवोपास्ते—

**कान्त्यम्भःपूरपूर्णे लसदसितवलीभङ्गभास्वत्तरङ्गे**
**गम्भीराकारनाभीचतुरतरमहावर्तशोभिन्युदारे ।**

**क्रीडत्वानद्धहेमोदरनहनमहोबाडबाग्निप्रभाढ्ये**
**कामं दामोदरीयोदरसलिलनिधौ चित्तमत्स्यश्चिरं नः ॥**

कान्तिः प्रभा तद्रूपस्य जलस्य प्रवाहेण निर्भरे । लसदसितवलीभङ्गभास्वत्तरङ्गे स्फुरन्तो नीलवर्णाश्च ये वलीभङ्गा रेखाविभागाः वलित्रयमित्यर्थः । त एव भास्वन्तः शोभमानाः कल्लोला यस्मिन् । गम्भीराकारा निम्नस्वरूपा नाभ्येव चतुरतरः अतिसुन्दरः महांश्चावर्तः जलभ्रमः तेन शोभितुं शीलमस्य । उदारे आयामविस्ताराभ्यामनवद्ये । उदरनहनम् उदरबन्धनम् 'केयूरोदरबन्धहार' इति मुकुन्दमालोक्तेः । तस्य महः तेजः तद्रूपया बाडबाग्निप्रभया बडबामुखानलज्वालया आढ्ये समृद्धे । काममवधारणे क्रीडत्वेवेत्यर्थः । दामोदरीयोदरसलिलनिधौ दामोदरो भगवान् विष्णुः, तत्संबन्धिन्युदररूपे समुद्रे, 'वृद्धाच्छः' इति छः । चित्तमत्स्यः चित्तरूपो मीनः, मत्स्यत्वारोपेणैतदाह— यथा जलात् पृथग्भूतो मत्स्यः परां वेदनामनुभवति तद्वदिदं चित्तमपि भगवद्विग्रहाद्विनाकृतं यथा संतप्यते तत्संनियोगे च निर्वृतं भवति तथा तस्मिन् रमतामिति । अत्र समस्तवस्तुविषयकं सावयवरूपकमलंकारः ॥ २६ ॥

अथान्तरिक्षस्वरूपस्योदरस्य मेघमालात्वेनोपास्याम्, अथ-

वा 'नद्योऽस्य नाड्योऽथ तनूरुहाणि महीरुहाः' इत्युक्तरीत्या रोमराजीमुपास्ते—

**नाभीनालीकमूलादधिकपरिमलोन्मोहितानामलीनां**
**माला नीलेव यान्ती स्फुरति रुचिमती वक्त्रपद्मोन्मुखी या।**
**रम्या सा रोमराजिर्महितरुचिकरी मध्यभागस्य विष्णो-**
**श्चित्तस्था मा विरंसीच्चिरतरमुचितां साधयन्ती श्रियं नः ॥**

नाभीपद्मस्याधोभागात् वक्त्रपद्मोन्मुखी यान्ती मुखकमलं लक्ष्यीकृत्य गच्छन्ती । अलीनां भृङ्गाणां । अलिशब्द इकारान्तो नकारान्तश्च दृश्यते, 'चूतनालिरलिनामतिरागात्' इति 'मंक्षूदपाति परितः पटलैरलीनाम्' इति च माघप्रयोगात् । नीला माला श्रेणीव याने हेतुः । अधिकपरिमलोन्मोहितानां नाभीनलिनपरिमलादधिकेन वक्त्रपद्मपरिमलेन परवशीकृतानामिति । रुचिमती प्रीतिशलिनी । स्फुरति भासते । रम्या अन्यूनानतिरिक्ततया स्निग्धनीलबहुलतया च हृदयंगमा मध्यभागस्य उदरप्रदेशस्य महितरुचिकरी सहृदयश्लाघ्यायाः शोभायाः हेतुः । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति हेतुत्वे टः । उचितां श्रियं साधयन्ती अधिकारविशेषवशात् तत्तद्योग्यां बुभुक्षोरुपासकस्य भुक्तिरूपां मुमुक्षोर्मुक्ति-

रूपाम् उभयाभिलाषिणश्चोभयरूपामित्यर्थः । संपदं पोषयन्ती । चित्तस्था मनसि धारणया संनिहिता सती चिरं मा विरंसीत् अर्थात् चित्तावस्थितेर्विरता मा भूदित्यर्थः । अत्रोत्प्रेक्षालंकारः ॥ २७ ॥

अथ 'उरःस्थलं ज्योतिरनीकमध्ये' इति वचनात् स्वर्लोकत्वेनोपास्यं वक्षःस्थलं क्रमप्राप्तमुपास्ते—

**संस्तीर्णं कौस्तुभांशुप्रसरकिसलयैर्मुग्धमुक्ताफलाढ्यं**
**श्रीवासोल्लासि फुल्लप्रतिनववनमालाङ्कि राजद्भुजान्तम् ।**
**वक्षः श्रीवृक्षकान्तं मधुकरनिकरश्यामलं शार्ङ्गपाणेः**
**संसाराध्वश्रमार्तैरुपवनमिव यत्सेवितं तत्प्रपद्ये ॥२८॥**

संस्तीर्णम् आच्छादितम् । कौस्तुभांशुप्रसरकिसलयैः अमृतमथनसमये क्षीरसागरादुद्धूतः माणिक्यविशेषः कौस्तुभं तस्यांशुप्रसराः प्रसृताः किरणाः प्रसरशब्दः सामीप्यात् द्रव्यं लक्षयति 'दन्तच्छदकान्तिं कपोलः' इत्यादिवत् । त एव किसलयानि अरुणकोमलबहुलप्रभतया पल्लवानि तैः । तत्सदृशैः किसलयैश्च । मुग्धमुक्ताफलाढ्यं शोभनैर्मुक्ताफलैर्मौक्तिकरत्नैः सामर्थ्याद्धारयष्ट्याकारेण स्थितैः तत्सदृशैः उज्ज्वलनिस्तलसंस्थानताफलैश्च समृद्धम् । श्रीवासोल्लासि श्रियो

मङ्गलदेवताया वासेन सदा संनिधानेन शोभया व्याप्त्या च शोभितुं शीलं यस्य । फुल्लप्रतिनववनमालाङ्कि फुल्लया विकसितया प्रतिनवया नित्यमम्लानत्वात् नूतनया वनमालया अञ्चित इति भागवतोक्तेः । पुष्पितस्य बालतरुवनस्य मालया रेखया चिह्नितं च समुदायिनः उपवनस्याप्यवयवत्वेन चम्पक-वकुलचन्दनादिवीथीविशिष्टत्वात् । राजद्भुजान्तं शोभमानः बाह्वोरन्तः मूलप्रदेशः यस्मिन् वक्षःसंबन्धित्वात् भुजान्तस्य, रा-जन्तः भुजाः भूर्जवृक्षा अन्ते समीपे यस्य च । श्रीवृक्षकान्तं श्रीवत्सेन सुन्दरम् । अश्वत्थैः पिप्पलैर्वा शोभितं च 'भूजा भूर्जे' इति 'श्रीवृक्षः पिप्पलोऽश्वत्थः' इति च वैजयन्ती । 'श्रीवृक्षो मालूरश्रीफलावपि' इत्यमरः । मधुकरनिकरश्या-मलं भ्रमरमालावन्नीलवर्णम् । भ्रमरैः श्यामलं च । संसारा-ध्वश्रमार्तैः अनादिसिद्धे संसारमार्गे अनवरतं भ्रमेण खिन्नैः, आध्यात्मिकादितापत्रयपीडितैरित्यर्थः । अनेन 'अनेकज-न्मसाहस्रीं संसारपदवीं व्रजन् । मोहश्रमं प्रयातोऽसौ वासना-रेणुकुण्ठितः' इति श्रीविष्णुपुराणोक्तमनुसंधत्ते । संसारार्थेन मार्गगमनेन यः श्रमः तेनार्तैश्च । उपवनम् आरामः कृत्रि-मवनतया छायादिभिः सपदि श्रमशमनापादनात् तद्ग्रहणम् । सेवितम् आश्रितम्, श्रमहरणायेत्यर्थः, 'एवं संसारदुःखा-र्ततापतापितचेतसाम् । विमुक्तिपादपच्छायामृते कुत्र सुखं

नृणाम्' इति, 'निरस्तानुशयाह्लादिसुखभावैकलक्षणा । भेषजं भगवद्भक्तिरेका त्वात्यन्तकी मता' इति च श्रीविष्णुपुराणवचनात् । प्रपद्ये इदमेवास्माकं सर्वस्वं नान्यत् किंचिदिति बुद्ध्या प्राप्नोमि । अत्र श्लेषोऽलंकारः । समासद्वयाश्रयेण विशेषसाम्यप्रतिपादनात् उपमानोपमेययोर्द्वयोरुपादानाच्च उभयश्लेषश्चायं भङ्गाभङ्गवत्त्वेन शब्दार्थश्लेषयोर्विद्यमानत्वात् ॥ २८ ॥

'हृदयं पर्जन्यः' इति सावित्रीहृदयोक्तरीत्या समस्ताभीष्टवर्षणात् पर्जन्यत्वेन वा 'अव्यक्तमाहुर्हृदयं मनस्तु स चन्द्रमाः' इति भागवतोक्तरीत्या सकलजगदुपादानत्वात् अव्यक्तरूपत्वेन वा भगवतो वक्षःस्थलमुपास्य इदानीं तल्लक्ष्मभूतं श्रीवत्समुपास्ते—

**कान्तं वक्षो नितान्तं विदधदिव गलं कालिमा कालशत्रो-**
**रिन्दोर्बिम्बं यथाङ्को मधुप इव तरोर्मञ्जरीं राजते यः ।**
**श्रीमान्नित्यं विधेयादविरलमिलितः कौस्तुभश्रीप्रतानैः**
**श्रीवत्सः श्रीपतेः स श्रिय इव दयितो वत्स उच्चैःश्रियं नः ॥**

श्रीपतेः वक्षः नितान्तम् अतिशयेन कान्तं शोभमानं विदधत् कुर्वाणः स्वत एव कान्तत्वात् नितान्तग्रहणम् ।

तत्रोपमानमाह—कालशत्रोः चिरादिप्रत्ययासाधारणकारणस्य सकलजगद्ग्रासान्यूनस्य तत्त्वविशेषस्य शत्रुः परिपन्थी तद्विरहात् यः तस्य । अथवा अन्तकस्य भक्तानुग्रहार्थं दमनं कृतवतः त्र्यम्बकस्येत्यर्थः । गलं कण्ठम् । कालिमा नीलवर्ण इव कालकूटकबलतः संभूत इति प्रसिद्धया लभ्यते अतश्च जगदुज्जीवननिमित्ततया कान्तत्वकरणम् । इन्दोः चन्द्रस्य बिम्बं मण्डलम् अङ्कः कलङ्को यथा । तस्यापि कारुण्यकृतशशत्राणमूलत्वात् 'सिंहिकासुतसंत्रस्तः शशः शीतांशुमाश्रितः' इति 'अङ्काधिरोपितमृगश्चन्द्रमाः शशलाञ्छनः' इत्यादिवचनैः, 'मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति' इति शाकुन्तलोक्तेश्च । मधुपः भ्रमर इव तरोरित्यर्थान्तरसंक्रमितवाच्येन ध्वनिना सहृदयसदसि वृक्षत्वव्यपदेशयोग्यस्य पारिजातादेरिति द्योत्यते । मञ्जरीं कुसुममल्लिकाम् । कान्तामिति लिङ्गविपरिणामः । तस्यापि बहुलमधुरसपरिमलभरसूचकत्वात् परभागजनकत्वं तु सर्वत्र स्फुटमेव । श्रीमान् स्वयं निरतिशयशोभाविशिष्टः । आहार्यशोभाप्यस्यास्तीत्याह कौस्तुभश्रीप्रतानैः कौस्तुभस्य श्रीः प्रभा तस्याः प्रतानैः विस्तारैः अविरलमिलितः निरन्तरं घटितः सदा समीपवर्तित्वात् । श्रीवत्सः उत्तमलक्षणभूतो रोमावर्तविशेषः 'श्रीवत्सेनोरसि श्रीमान् रोमावर्तेन राजते' इति श्रीहरिवंशोक्तेः । श्रियः कमलायाः

वत्सः पुत्र इव दयितः स्नेहभूमिः 'दक्षिणस्तनाद्धर्मः' इति भागवतोक्तेः दक्षिणस्तनसमीपवर्तित्वात् श्रीवत्सस्य तत्स्थानवासनाच्च श्रिय इति भावः। नित्यम् उच्चैःश्रियं सर्वदा निरतिशयां संपदं भगवदनुभूतिलक्षणां विधेयात् कुर्यात् इत्याशीर्लिङ्। अत्र श्री-शब्दस्य बहुश आवृत्तावपि न कथितपदत्वदोषप्रसङ्गः। संबन्धिभेदादर्थभेदस्य दर्शितत्वात् लाटानुप्रासत्वेन चमत्कारकारितेन 'द्विपानामिव पुण्डरीको राज्ञामजय्योऽजनि पुण्डरीकः' 'शान्ते पिताहृतपुण्डरीकोऽयम्' 'पुण्डरीकाक्षमिवाश्रिता श्रीः' इत्यादिमहाकविप्रयोगात्। अत्र च श्रीपतेः संबन्धी श्रीवत्सनामा स्वयं श्रीमान् कौस्तुभश्रीप्रतानैराप्यायितः श्रियो दयितश्च तस्येत्यर्थः। सर्वतः श्रीमयानामस्माकं श्रीविधाने कोऽतिभारः इति तात्पर्यात्। लाटानुप्रासे अर्थान्तरसंक्रमितवाच्ये हि तस्यानुवाद्यत्वेन च कथितपदस्य गुणत्वकथनाच्च। अत्रोपमा उत्प्रेक्षा च अलंकारः ॥ २९ ॥

'श्रीवत्ससंस्थानधानेऽन्ते च समाश्रितम्। प्रधानं बुद्धिरध्यास्ते गदारूपेण माधवम्' इति वचनात् प्रधानतत्त्वात्मकश्रीवत्समुपास्य, इदानीम् 'आत्मानमस्य च जगतो निर्लेपं गुणामलम्। बिभर्ति कौस्तुभमणिस्वरूपं भगवान्हरिः' इति वचनात् आत्मतत्त्वात्मना अनुसंधेयं कौस्तुभमणिराजमुपास्ते—

**संभूयाम्भोधिमध्यात्सपदि सहजया यः श्रिया संनिधत्ते**
**नीले नारायणोरःस्थलगगनतले हारतारोपसेव्ये ।**
**आशाः सर्वाः प्रकाशा विदधदपिदधच्चात्मभासान्यतेजो-**
**स्याश्चर्यस्याकरोनोद्युमणिरिवमणिःकौस्तुभःसोऽस्तुभूत्यै ।**

संभूय जनित्वा अम्भोधिमध्यात् समुद्रगर्भात् । सपदीत्यचिन्त्याविर्भावं द्योतयति । सहजया, तस्या अप्यमृतमथनकाले स्वेन सह जातत्वात् सोदर्यत्वम् । सदा श्रिया मङ्गलदेवतया सहेत्यायाति । संनिधत्ते सदा अवतिष्ठते । नीले असितवर्णे हारतारोपसेव्ये ताराभिर्नक्षत्रैरिव मुक्तावलीभिराश्रयणीये । नारायणोरःस्थलगगनतले शेषशायिनो विपुलायतत्वादाकाशतुल्ये वक्षसि । आशाः दिशः । प्रकाशाः प्रकर्षेण व्यक्तरूपाः, प्रकाशशब्दो धर्मिणि धर्मे च वर्तते । 'श्रुतप्रकाशं यशसा प्रकाशः' इति 'तिमिरनिकरमुद्यन्नैन्दवः प्राक् प्रकाशः' इति च प्रयोगात् । विदधत् कुर्वन् । अपिदधत् तिरस्कुर्वन् । आत्मभासा स्वस्य तेजसा अन्यतेजांसि आदित्यादिप्रभाः । आश्चर्यस्य विस्मयजननस्य कर्मणः अमृतवर्षणादेः । आकरः उत्पत्तिस्थानम् । 'किं नाम्नो वा पितुरयममृतवर्षी कौस्तुभमणिरिव हरेर्हृदयमाह्लादयति' इति हर्षोक्तेः । कौस्तुभः तदाख्यया ख्यातः ।

मणिः माणिक्यम्। भूत्यै समृद्ध्यै। अस्तु भवतु इति प्रार्थने लोट्। द्युमणिः दिवसस्य दीपो वा प्रकाशकत्वात् आदित्यः स इव। सोऽपि समुद्रात् संभूय सहजया तुल्यकालमाविर्भवन्त्या लक्ष्म्या श्रिया उदयरागशोभया नारायणोरःस्थलतुलिते गगनतले हारसदृशतारोपसेव्ये संनिधत्ते। अन्यतेजांसि चन्द्रादिप्रकाशान् आश्चर्यस्य चिन्तनीयस्य कोष्णवारिवृष्टिकर्मणः आकरः द्युमणिरिवेत्यर्थः। आत्मरूपेऽभ्युपास्ये तदनुगुणतया अस्यार्थो योज्यते। संसारसागरगर्भात् सोपाधित्वेन प्रादुर्भूय नित्यसिद्धया सत्यज्ञानानन्दस्वरूपया संपदा सह कदाचिदप्यविरहित एवेत्यर्थः। 'स्वभावोऽन्यविपर्ययः' इत्युक्तस्वरूपस्यानपायात् कर्तृत्वादेश्चाध्यस्तत्वात्। सपदि अचिन्तनीयमित्यनिर्वचनीयमायावशात्, न तु कर्मपारतन्त्र्यादिति व्यज्यते। नीले पुण्यपापाभ्यां मलिने अथवा रलयोरभेदात् नीरे जले इति व्यधिकरणसप्तमी। उरःस्थलशब्देन उदरं लक्ष्यते, 'आकाशमुदरम्' इति श्रुतेः भगवदुदरभूते नभसि ब्रह्माण्डभाण्डगर्ते इत्यर्थः। हारतानां सततदुःखभाजनतया हेति विषादद्योतके शब्दे रतानां वैषयिकसुखस्याभिमानिकत्वात् दुःखस्यैव स्वभावत्वात् हारतत्वोक्तिः। आरोपेण अहमाद्यध्यासेन सेव्ये व्यवहारगोचरीभूते 'मिथ्याज्ञाननिमित्तः सत्यानृते मिथुनीकृत्याहमिदं ममेद-

मिति नैसर्गिकोऽयं लोकव्यवहारः' इत्याचार्यवचनात् । संनिधत्ते इति चैतन्यात्मना स्फुरति न तु जायते 'न जायते म्रियते वा कदाचित्' इति श्रुत्या षण्णां भावविकाराणां प्रतिषिध्यमानत्वादिति द्योत्यते संनिधिः सत्तामात्रेण भ्रामको वा मनश्चक्षुरादिप्रेरक इत्यर्थः । आशाशब्देन संकल्पादिमनोवृत्तय उपलक्ष्यन्ते आशाया रागविशेषात्मकत्वात् तन्मूलत्वाच्च द्वेषादीनाम् आत्मभास्वररूपभूतेन चैतन्येन प्रकाशा विषयीकृता 'विदधुः स हरये बुद्धिसाक्षिणे नतो स्मृते सर्वधीसाक्षिभूतम्' इत्याचार्यवचनात् । सर्वथा इति क्रमदर्शनान्यथादर्शनादर्शनानामात्मन्यसंभवः प्रकाश्यते 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' इति 'नमतेर्मन्तारं मन्वीथा' इत्यादिश्रुतिवचनैः 'क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत' इति भगवद्वचनात् । 'अनेका धियो यस्तथैकप्रबोधः स नित्योपलब्धिस्वरूपोऽहमात्मा' इत्याद्याचार्यवचनाच्च । अन्यतेजांसि सूर्यादिप्रकाशान् अपिदधत् अधःकुर्वन्, आत्मभासेत्यत्रापि संबध्यते । तेषामपि तदधीनप्रकाशत्वात् 'तस्य भासा सर्वमिदं विभाति' इत्यादिश्रुतिभ्यः । आश्चर्यस्य अद्भुतस्य बुद्धेः आस्पदीभूतः अनुभवसमये अनवयवत्वप्रतीतेः आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद्वदति तेजोऽन्तराणि तिरस्करोति च तथायमपीत्युक्तमर्थं दृष्टान्तेन

द्रढयति । य एवंभूतः स आत्मा कौस्तुभो मणिः उपासनाय भक्तानां कौस्तुभः सन् परमेश्वरे स्वातिरिक्तो वर्तमानः अस्माकं भूत्यै भवत्वित्यर्थः । अत्रार्थश्लेषोऽलंकारः, सूक्ष्मश्च ॥ ३० ॥

इत्थं मणिराजमुपास्य इदानीं महाभूतपञ्चकस्वरूपां मालामुपास्ते—

**या वायावानुकूल्यात्सरति मणिरुचा भासमाना समाना**
**साकं साकम्पमंसे वसति विदधती वासुभद्रं सुभद्रम् ।**
**सारं सारङ्गसङ्घैर्मुखरितकुसुमा मेचकान्ता च कान्ता**
**माला मालालितास्मान्न विरमतु सुखैर्योजयन्ती जयन्ती ॥**

या वायौ मारुते आनुकूल्यात् मनोगुणत्वेन दिव्यस्पर्शगन्धविशिष्टतया प्रशस्तदिग्भागप्रवृत्तैश्च सरति वीजमाने मणिरुचा भूषणरत्नप्रभया साकं सह तस्या अपि नानावर्णत्वात् बहुलकुसुमारचितत्वाच्च तया तुल्यमित्यर्थः । साकम्पम् आकम्पेन ईषच्चलनेन सहितम् यथा तथा । अंसे स्कन्धदेशे या वसति सदा वर्तते इति संबन्धः । भासमाना दिव्यवर्णपञ्चकयुक्ततया दीप्यमाना असमाना समानं सदृशं वस्तु मालान्तरम् अर्थान्न विद्यते यस्याः । अथवा मानेन

'मत्तः कोऽन्यो मान्यः' इत्यभिमानेन सहिता । तत्र हेतुः वासुभद्रं वसति वासयतीति वासुः औणादिक उप्रत्ययः । साधनात् साधुरितिवत् । 'प्रत्ययतः प्रकृतेश्च तदूह्यम्' इति वचनात् । भद्रः कल्याणः, निरतिशयज्ञानशक्त्यादिकल्याणगुणसागरत्वात् । 'वसनात् देवनाच्चैव वासुदेवं ततो विदुः' इति मोक्षधर्मे 'भूतेषु वसते सोऽन्तर्वसन्त्यत्र च तानि यत् । धाता विधाता जगतां वासुदेवस्ततः स्मृतः' इति श्रीविष्णुपुराणे च पृथक्पदावयवस्य निरुक्तत्वात् । अथवा सुशब्देन स्थितिकर्तृत्वभङ्ग्या प्रतिपादनात् भद्रशब्देन सृष्टिकर्तृत्वं संहर्तृत्वं च प्रकाश्यते । तथा हि 'भूभृञोर्मे छन्दसि' इति सूत्रात् 'संहर्तेति तथा हर्ता हकारार्थद्वयान्वितः' इति पुराणवचनाच्च भकारेण संहर्ता स्रष्टेत्युच्यते । द्रशब्देन द्रावयति विलापयतीति संहर्ता रोदयति द्रावयतीति यथा द्रः तमित्यर्थः । सुभद्रं सुष्ठु सुखितम् । विदधती दिव्यस्पर्शरूपरससौरभ्यसंपन्नत्वात् । 'भद्र कल्याणे सुखे च' इति धात्वर्थानुसरणात् । साकम्पमंसे वसतीति स्पर्शः सूचितः । सेति यच्छब्दप्रतियोगी तच्छब्दः सूचितः । अरं शीघ्रम् 'लघु क्षिप्रमरं द्रुतम्' इत्यमरः । सुखैर्योजयन्तीत्युपरि संबन्धः । अथवा रलयोरविशेषादलं पर्याप्तमिति सुखरणक्रियाविशेषणम् । 'सा-

रङ्गः शबलो वर्णश्चातकः षट्पदो मृगः ' इति वैजयन्ती। षट्पदानां समूहैः । बहुवचनात् उपर्युपरि परिमलपरिमोहितानामनास्वादितपूर्वममृतरसनिन्दकं मकरन्दनिष्यन्दमभिनन्दतां भ्रमराणां बृन्दसमापतनं द्योत्यते। मुखरितकुसुमा वाचालितानि पुष्पाण्यङ्गभूतानि यस्याः । मेचकान्ता च श्यामलपरिसरा चकारः सारङ्गसङ्घैरित्यनुकर्षणार्थः। कान्ता अत एव परभागलाभेन रमणीयतरा। आभ्यां विशेषणाभ्यां शब्दरसगन्धरूपातिशयः प्रकाशितो वेदितव्यः । मालालिता मया लक्ष्म्या पुत्रवत्संभाविता हरिपरिरम्भसंरम्भेष्वपि सदयं परिपाल्यमानेत्यर्थः। 'इन्दिरा लोकमाता मा' इत्यमरः। जयन्ती देव्याः श्रियः देवस्य श्रीपतेश्च निरतिशयस्नेहभाजनत्वजनकैः सुकृतैः सर्वं जगदभिभूय वर्तमाना माला वैजयन्त्याख्या स्रक् 'पञ्चरूपा तु या माला वैजयन्ती गदाभृतः । सा भूता नेतृसंघाता भूतमाला च वै द्विज' इति श्रीविष्णुपुराणवचनात्। सुखैरिति बहुवचनेन ऐहिकैर्मोक्षसुखपर्यन्तैरिति द्योतयति । योजयन्ती श्लेषयन्ती सती। न विरमतु अस्मात् व्यापारात् निवृत्ता माभूत् । अत्र पादाद्यन्तयमकं शब्दालंकारः। व्यापकप्रथमपादे त्वर्थालंकारः स सहोक्तिरेकवाचकानुप्रवेशेन लक्षणेन संकरेण वर्तते साकम् इत्येकस्मिन्

वाचके द्वयोरनुप्रवेशात् ॥ ३१ ॥

अथ भगवतो बाहुमूलमुपास्ते—

**हारस्योरुप्रभाभिः प्रतिनववनमालांशुभिः प्रांशुरूपैः**
**श्रीभिश्चाप्यङ्गदानां कबलितरुचि यन्निष्कभाभिश्च भाति ।**
**बाहुल्येनैव बद्धाञ्जलिपुटमजितस्याभियाचामहे त-**
**द्वन्धार्ति बाधतां नो बहुविहतिकरीं बन्धुरं बाहुमूलम् ॥**

हारस्य मुक्तावल्याः उरुप्रभाभिः विस्तीर्णाभिर्द्युतिभिः प्रतिनवाया वनमालाया अंशुभिः किरणैः दिव्यतया तेजोमयत्वात् प्रांशुभिः आयताकारैः उत्सर्पिभिः प्रांशुभिरिव अंशुजालैरिति, 'प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः' इत्यादिप्रयोगात् । अङ्गदानां दोर्मूलभूषणानाम् 'केयूरमङ्गदं भूषा दोर्मूले' इति वैजयन्ती । श्रीभिः शोभाभिः निष्कभाभिः उरोभूषणद्युतिभिः 'निष्कोऽस्त्री हेम्नि दीनारे साष्टे कर्षशते पले । उरोविभूषणे' इति वैजयन्ती । शबलितरुचि नानावर्णीकृतं स्वाभाविकं वर्णं तद्योजितमिति यावत् । यत् भाति केवलं प्रकाशमयते न दीप्यते न पुनरुपमोत्प्रेक्षादिविषय इत्यर्थः । बाहुल्येन अतिशयेनेति याचने संबध्यते बाधने वा । बद्धाञ्जलिपुटं घटिताञ्जलिकु-

ष्मलं यथा तथेति याचनक्रियाविशेषणम् । अभियाचामहे आभिमुख्येन प्रार्थयामहे इति सामान्येन याचनसूचनम् । मध्ये वाक्यान्तरप्रवेशश्च दीनतातिशयद्योतकः 'त्वामसि वच्मि पंतिअत्तं किण्णपम्मुसिमि' इत्यादिवत् । सूचितो याच्ञाविशेषः क इत्यत्राह बन्धार्तिमिति । पुण्यपापरूपकर्मनिगलबन्धनजनितां पीडाम् । बहुविहतिकरीम् बहोरनेकस्य पुरुषार्थस्य प्रतिबन्धहेतुम् । बाधतां विलोपयतु खण्डयत्वित्यर्थः । बन्धुरं सुन्दरं बाहुमूलं भुजानां साधारणं प्ररोहाधिष्ठानं स्कन्धदेश इत्यर्थः । जात्येकवचनमिदम् बाहुमूलयोर्विद्यमानत्वात् । अत्र तद्गुणः स्वभावोक्तिश्चालंकारः ॥ ३२ ॥

मरुतो बाहुरिति सावित्रीहृदयोक्तेः बलाधिष्ठानतया मरुद्रूपं बाहुमूलमुपास्य इदानीम् 'इन्द्रादयो बाहव आहुरस्य' इति वचनात् इन्द्रादिदेवतात्वेनोपास्यान् बाहूनेवोपास्ते—

**विश्वत्राणैकदीक्षास्तदनुगुणगुणक्षत्रनिर्माणदक्षाः**
**कर्तारो दुर्निरूपस्फुटगुणयशसां कर्मणामद्भुतानाम् ।**
**शार्ङ्गं बाणं कृपाणं फलकमरिगदे पद्मशङ्खौ सहस्रं**
**बिभ्राणाः शस्त्रजालं मम दधतु हरेर्बाहवो मोहहानिम् ॥**

विश्वस्य जगतस्त्राणे पालने एकस्मिन्नेव दीक्षा व्रतधारणं येषाम् । पूर्णकामस्य प्रयोजनान्तरानुद्देशेन धर्मसंस्थापनमेवापेक्षितमिति एकशब्देन द्योतयति । 'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन । अनवाप्तमवाप्तव्यं वर्तते न च कर्मणि', 'धर्मसंस्थापनार्थाय संभवामि युगे युगे' इत्यादिभगवद्वचनात् । तदुपायप्रयोगवैदग्ध्यमाह तदनुगुणगुणक्षत्रनिर्माणदक्षाः । तदिति त्राणं परामृश्यते । तस्मिंस्त्राणे अनुगुणाः अनुकूलाः गुणाः यस्य रजोऽधिकसत्त्वविशिष्टत्वात् क्षत्रस्य क्षत्रियवर्गस्य 'स क्षत्रं नाम वर्णः' इति मुरारिप्रयोगात् । निर्माणे सर्गे विदग्धाः 'ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः' इति श्रुतेः । 'ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप । कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः' 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्' इति भगवद्वचनात् । 'वक्षसश्च रजोद्रिक्तास्तथान्या ब्राह्मणाभवन्' इति श्रीविष्णुपुराणवचनाच्च । तर्हि प्रयोजककर्तृत्वमेव न स्वयं कर्तृत्वमाह— स्फुटगुरुयशसां स्फुटं सार्वलौकिकं गुरु अनल्पं यशः कीर्तिर्येषु तत्र हेतुः अद्भुतानाम् अन्यैर्मनसाप्यचिन्त्यत्वात् कर्मणां कार्याणां भूमण्डलोद्धरणदितिजभुजषण्डखण्डनादीनाम् 'उद्धृतासि वराहेण कृष्णेन शतबाहुना' इति मन्त्रव-

र्णात् हिरण्यादिनिरसनप्रसिद्धेश्च । कर्तारः अनुष्ठातारः । तथापि दुर्निरूपाः कुतोऽयमेतेषामीदृशः प्रभाव इति चिन्तयितुमशक्याः अचिन्त्यशक्तित्वात् 'किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं किमाधारो धाता सृजति किमुपादान इति च । अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः' इति भट्टाचर्योक्तवत् । शार्ङ्गं धनुःश्रेष्ठं बाणं शरं जात्येकवचनम् । कृपाणं खड्गं फलकं खेटम् । अरिगदे चक्रं गदां च । पद्मशङ्खौ कमलं शङ्खं च । अत्राष्टसु गणितेषु दिव्यायुधेषु चक्रबाणकृपाणपद्मानां दक्षिणत ऊर्ध्वभागमारभ्य धारणम्; शङ्खशार्ङ्गफलकगदानां तु वामत ऊर्ध्वादितो धारणं चेति क्रमो मन्तव्यः । अक्रमोक्तिस्तु भक्तिसंभ्रमद्योतिका । अत एव प्रक्रान्तस्य गणनस्य परित्यागतः शस्त्रजालमित्युक्तम् । गणितव्यतिरिक्तं शक्तिमुसलपरशुमुद्गरभिण्डिपालादीनां शस्त्राणाम् आयुधानां समूहं बिभ्राणा धारयन्तः । तत्र हेतुः सहस्रम अनेकसंख्योपलक्षणार्थमिदम्, सहस्रं बहव इति संख्येयविषयत्वात् । 'संख्याया द्योतने बहुता संख्येयेषु सदैकता' इति वैजयन्ती । सहस्रमित्यनेन 'शान्तं पापम, हन्त सापराधा वयम्, अनन्तदिव्यायुधधारिणामपरिगण्यानां भगवद्भुजानां गणने प्रवृत्ताः' इति भयं व्यज्यते । 'अनेकदिव्याभरणं

दिव्यानेकोद्यतायुधम्,' 'अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम्' इति श्रीगीतावचनात्। 'सहस्रास्यं सहस्राक्षं सहस्रचरणं च यम्। सहस्रशिरसं देवं सहस्रकरमव्ययम्' इति श्रीहरिवंशोक्तेश्च। मोहहानिम् अज्ञानस्य समस्तानर्थबन्धोः उन्मूलनम्। सम्यग्ज्ञानमन्तरेण तन्निवृत्त्यनुपपत्तेर्विमुक्तिमातरं तत्त्वज्ञानं पोषयत्विति प्रार्थनायां लोट्। अत्र वीराद्भुतयोर्व्यक्तिः। अङ्गाङ्गिनोरभेदोपचारात् कर्तृत्वाद्युक्तिः स्वभावोक्तिरलंकारः॥

इत्थमिन्द्रादिदेवतारूपान् बाहूनुपास्य इदानीम् 'ग्रीवा महः' इत्युक्तं महर्लोकत्वेनोपास्यं कण्ठनालमुपास्ते—

**कण्ठाकल्पोद्गतैर्यः कनकमयलसत्कुण्डलोत्थैरुदारै-**
**रुद्योतैः कौस्तुभस्याप्युरुभिरुपचितश्चित्रवर्णो विभाति।**
**कण्ठाश्लेषे रमायाः करवलयपदैर्मुद्रिते भद्ररूपे**
**वैकुण्ठीयेऽत्र कण्ठे वसतु मम मतिः कुण्ठभावं विहाय॥**

कण्ठाकल्पाः कण्ठभूषणानि हारादीनि तेभ्यः उद्गतैः प्रवृत्तैः। कनकमयाभ्यां लसद्भयां कुण्डलाभ्यामुत्थैः उत्थितैः। 'कल्पद्रुमोत्थैरवकीर्य पुष्पैः' इतिवत्। उदारैः अनल्पैः शोभनैर्वा। कौस्तुभस्याप्युरुभिः विस्तीर्णैः। उद्यो-

तैरिति सर्वत्र संबध्यते । प्रकाशैः उपचितः समन्तादावृतः । चित्रवर्णः निजं नीलिमानमपास्य शबलवर्णो भूतः । विभाति विशेषेण शोभते । कण्ठाश्लेषे दृढतरकण्ठग्रहे । कण्ठाकल्पकण्ठाश्लेषशब्दौ आभरणविशेषालिङ्गनयोः रूढौ । अतो न कथितपदवत्त्वदोषः । रमायाः करवलयपदैः पाणिसंनिहितकङ्कणगाढीभावजनिताभिः रेखाभिः । वलयशब्देन गतार्थत्वेऽपि करग्रहणं तत्संनिधानबोधनार्थम् । असंनिधानेऽपि वलयस्याविरोधात् । मुद्रिते चिह्निते कण्ठाश्लेषमुद्रित इत्यनेन प्रतिकण्ठाश्लेषं मौग्ध्यात् मुद्रितत्वम् । क्षणान्तरे मुद्रणस्य फलस्यासिद्धेश्च स्मरदुर्ललितस्य पल्लवकोमलवल्लभाजनस्य भुजवल्लीभिर्निर्दयविमर्देन यथेष्टमुच्छेषणादिति सोत्प्रासं वचनं तत्र हेतुः । भद्ररूपे जगन्मोहनसौन्दर्ये इति । अतः कथमनङ्गसंकुलादङ्गनाजनादनेन रक्ष्यतामिति भावः । अनेन शृङ्गाररससर्वस्वभृङ्गारत्वमस्य द्योत्यते । विगतकुण्ठीभावे संततभजनजागरूकेषु सुकृतिजनेषु इति वा विकुण्ठाख्याया मातुरपत्यमिति वा विकुण्ठ एवेति स्वार्थे वा तद्धितप्रत्ययः वैकुण्ठः पुरुषोत्तमः । तत्संबन्धीनि वैकुण्ठीये 'वृद्धाच्छः' इति छः । अत्रेति यच्छब्दप्रतियोगी इदंशब्दः । 'सप्तम्यास्त्रल्' अस्मिन्नित्यर्थः । कण्ठे ग्रीवानाले । कुण्ठः प्रतिहतस्य भावः कुण्ठशब्दश्च निशितारेष्वायु-

धप्रतिहतेषु प्रयुज्यते । 'पूर्वं तपोवीर्यमहःसु कुण्ठः,' 'आः शस्त्रग्रहणादकुण्ठपरशोः' इत्यादिप्रयोगात् । स चात्र लक्षणया मान्द्यमाह । तमोगुणोद्रेकजनितं मान्द्यं विहाय त्यक्त्वा । मम मतिः बुद्धिः । वसतु गृहत्वेन तमभिमन्यतामिति प्रार्थने लोट् । अत्र तद्गुणालंकारः ॥ ३४ ॥

अथ 'व्रीडोत्तरोष्ठोऽधर एव लोभः' इति तत्त्वेनोपास्यं दन्तच्छदमुपास्ते—

**पद्मानन्दप्रदाता परिलसदरुणश्रीपरीताग्रभागः**
**काले काले च कम्बुप्रवरशशधरापूरणे यः प्रवीणः ।**
**वक्त्राकाशान्तरस्थस्तिरयति नितरां दन्ततारौघशोभां**
**श्रीभर्तुर्दन्तवासोद्युमणिरघतमोनाशनायास्त्वसौ नः ॥**

पद्मायाः श्रियः निजरसामृतेन परमं सुखं प्रदातुं शीलं यस्य पद्मानां कमलानां विकाससुखं च । परिलसदरुणश्रीपरीताग्रभागः परिस्फुरन्त्या रक्तवर्णया परीतः प्राप्तः अग्रभागः अर्थान्मुखस्य पुरोदेशो यस्य । अरुणस्य गरुडाग्रजस्य रुचा परिवृताग्रदेशश्च, तस्य सारथित्वेन रथपुरोभागवर्तित्वात् । काले काले यदा यदा दनुजसमरसंरम्भादिकार्यं प्रसज्यते तदेत्यर्थः । चकारः पूर्वविशेषणसमुच्चयार्थः ।

कम्बुप्रवरः शङ्खराजः पाञ्चजन्यः तद्रूपस्य शशधरस्य प्रसन्नधवलमण्डलत्वात् आपूरणे मुखानिलेन ध्मापने प्रवीणः समर्थः कर्मणि कुशल इत्यादिवल्लाक्षणिकः प्रयोगः । अधरस्य पूरणकर्तृत्वोक्तिः तत्र निवेश्य पूर्यमाणत्वात् । 'स उच्चकाशे धवलोदरो दरो ह्युरुक्रमस्याधरशोणशोणितः' इति, 'ततः प्रियोपात्तरसेऽधरोष्ठे निवेश्य दध्मौ जलजं कुमारः' इत्यादिप्रयोगात् । यदा यदा क्षीयते तदा तदा कम्बुप्रवरसदृशस्य शशधरस्य स्वसंगृहीतेनामृतरसेन रजतकलशस्येव क्षीरपूरेण पूरणाच्च । 'क्षीणं पीतं सुरैः सोममाप्याययति दीप्तिमान्' इति श्रीविष्णुपुराणवचनात् । 'यस्मिन् सोमः सुरपितृनरैरन्वहं पीयमानः क्षीणः क्षीणः प्रविशति यतो वर्धते चापि भूयः' इति साम्बोक्तेश्च । वक्त्राकाशान्तरस्थः मुखविवरसमीपवर्ती अन्तरशब्दोऽत्र समीपं लक्षयति । राज्ञोऽयमभ्यन्तर इतिवत् । वक्त्रशब्देनारम्भो लक्ष्यते । मुखभूतस्याकाशस्य मध्ये स्थितः उदितमात्र इत्यर्थः । उदयरागरूषितस्येवाधरसाम्योक्तेः । दन्ततारौघशोभां दशनत्वेन स्थितानां ताराणाम् 'दंष्ट्रा यमश्चोडुगणा द्विजानि' इति भागवतवचनात् । दन्तानां ताराधवलानां वा 'आकाशमापूरिततारतारम्' इतिवत् । द्विरददन्तवलक्षाणां नक्षत्राणां कान्तिं च स्वारुण्योपरागात् तेषां धावल्यस्य त्या-

जितत्वात् रश्मिभिरभिभूतत्वाच्च । नितरां तिरयति अत्यन्तं छादयति यः असाविति तच्छब्दार्थमाह— श्रीभर्तुः विष्णोः दन्तवासोद्युमणिः दन्तच्छदरूपः सूर्यः अघतमोनाशनाय 'दुःखैनोव्यसनेष्वघम्' इति वैजयन्ती । अत्रान्येऽप्यर्थास्तन्त्रेणोपात्ताः । एनसः पापस्य तत्कार्यस्य अकार्यनिबन्धनस्य दुःखस्य तज्जन्यस्य निरययातनादेश्च तिमिरस्य निरसनं कर्तुम् । अस्तु प्रवर्तताम् । कृभ्वस्तीनां क्रियासामान्यवाचित्वात् अत्र श्लेषनिबन्धनं रूपकमलंकारः ॥ ३५ ॥

'दंष्ट्रा यमश्चोडुगणा द्विजानि' इति वचनादुडुगणात्मनोपास्यां दन्तावलीमुपास्ते—

**नित्यं स्नेहातिरेकान्निजकमितुरलं विप्रयोगाक्षमा या**
**वक्त्रेन्दोरन्तराले कृतवसतिरिवाभाति नक्षत्रराजिः ।**
**लक्ष्मीकान्तस्य कान्ताकृतिरतिविलसन्मुग्धमुक्तावलिश्री-**
**र्दन्ताली सन्ततं सा नतिनुतिनिरतानक्षतान्रक्षतान्नः ॥**

स्नेहातिरेकात् प्रणयातिशयात् निजकमितुः स्वविषये प्रेमशालिनः । 'अनुकाभिकाभीकः कमिता' इति सूत्रम् । अलम् अतितराम् । विप्रयोगाक्षमा विरहं सोढुमशक्ता । वक्त्रेन्दोः मुखरूपस्य चन्द्रस्य । अन्तराले औचित्यादुत्सङ्गे । नित्यं

कृतवसतिः सदा वासं कुर्वाणा । नक्षत्रराजिः तारकाणां मालेव या भाति, चन्द्रस्य तारापतित्वप्रसिद्धेः । कान्ताकृतिः सुन्दरसंस्थाना, अन्यूनानतिरिक्तत्वात् । अतिविलसन्त्याः प्रभाबाहुल्यात् मुग्धायाः कोमलायाः मुक्तावल्याः हारलतायाः श्रीः शोभेव शोभा यस्याः क्रमावस्थितेः प्रसन्नधवलस्निग्धवर्णतया च । दन्ताली दशनानामावलिः जात्येकवचनमिदम् । नतिनुतिनिरतान् प्रणामे स्तुतौ च निरतान् सक्तान् । अक्षतान् दुःखैरबाधितान् इत्यनुवादेऽपि विधिपर्यवसायी । 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इतिवत् । रक्षणप्रकारकथनं चेदम् । इत्थंभूतान् कृत्वा रक्षत्वित्यर्थः । आशिषि लोट् । अत्रोत्प्रेक्षालंकारः ॥ ३६ ॥

अथ 'छन्दांस्यनन्तस्य शिरो गृणन्ति' इति वचनात् छन्दोमयीं भगवतो वाचं मुखप्रस्तावगतामुपास्ते—

**ब्रह्मन्ब्रह्मण्यजिह्मां मतिमपि कुरुषे देव संभावये त्वां**
**शंभो शक्र त्रिलोकीमवसि किममरैर्नारदाद्याः सुखं वः ।**
**इत्थं सेवावनम्रं सुरमुनिनिकरं वीक्ष्य विष्णोः प्रसन्न-**
**स्यास्येन्दोरास्रवन्ती वरवचनसुधा ह्लादयेन्मानसं नः ॥**

ब्रह्मन् हे स्रष्टः ब्रह्मणि सच्चिदानन्दैकरसे निष्कले परमा-

त्मस्वरूपे । अजिह्माम् अकुटिलां यथार्थज्ञानेन विगतसंशयविपर्ययाम् । अथवा अन्तरायरूपालस्यादिरहिताम् । मतिं बुद्धिं ध्यानरूपामित्यर्थः । सृष्टिशक्त्युद्बोधनायेति भावः, 'अथाभिध्यायिनस्तस्य सत्याभिधायिनः' इति श्रीविष्णुपुराणवचनात् । अपिः प्रश्ने सानुनये । कुरुषे योजयसि; कर्त्रभिप्रायक्रियाफलद्योतकमात्मनेपदम् । देव क्रीडाशीलेति सोत्प्रासं वचनम् । पितृवनधरणीविचरणादिकं तव ममत्वबुद्धयो न जानन्ति । मादृशा एव तव प्रभावमात्मारामत्वं निःस्पृहत्वं च प्रतियन्तीति भावः । तत्र हेतुः— शंभो शं सुखं भक्तानामस्मात् भवति अयं वा भावयतीति निरुक्त्या परमानन्दरूपमिति द्योतयति । 'हसन्ति यस्याचरितं हि दुर्भगाः स्वाभाविकस्याविदुषः समीहितम् । यैर्वस्त्रमालाभरणानुलेपनैः श्वभोजनं स्वादुतयोपलालितम्' इति श्रीभागवतोक्तेः । अतस्त्वां संभावये इतरेभ्यो विशेषादासनस्वागतादिना सत्करोमि । 'णिचश्च' इत्यात्मनेपदम् । शक्र हे देवेन्द्र अमरैः अग्न्यादिभिः सह त्रिलोकीं त्रयाणां लोकानां समाहारः; 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति द्विगुसमासे स्त्रीत्वम् । अवसि किम्? किंशब्दः प्रश्ने । अहरहस्तदर्थमुद्यच्छसे किम्? विरुद्धोपनिपातश्च न विद्यते? इत्यर्थः । अन्यथा तत् प्रतिकुर्महे

इति भावः । नारदाद्याः नारदः आदिर्येषाम्; आदि-शब्दः प्रकारवाची । तत्प्रकारविशिष्टाः सनकसनन्दनादयो मदात्मभूताः हे परमयोगिनः, वः सुखम्, युष्माकं सदा सुखानुभूतिरेव । न लोकवत् तत्र प्रष्टव्यत्वं भवताम् । आत्मारामत्वान्निःस्पृहत्वाच्चेति भावः; 'मद्भक्ता मद्गतप्राणा बोधयन्तः परस्परम् । कथयन्तश्च मां नित्यं तुष्यन्ति रमयन्ति च' इति स्वोक्तेः । अत्र च अधिकारयोगात् ब्रह्मणोऽपि कुशलप्रश्नावकाशः । कर्तृत्वाभिमानिनां शक्रादीनां किं पुनः । नारदादीनां तु ब्रह्मभावनासक्तानां कृतकृत्यतया न तत्प्रश्नोपपत्तिरिति सूचितम् । 'सनकादयो वै ब्रह्मभावनायुताः । कर्मभावनया चान्ये देवाद्याः स्थावरावराः । हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा । अधिकारबोधयुक्तेषु विद्यते भावभावना' इति श्रीविष्णुपुराणवचनात् । इत्थम् अनेन प्रकारेण आस्येन्दोरास्रवन्तीत्यन्वयः । सेवावनम्रम् अनुवर्तनार्थं प्रवणम् । सुरमुनिनिकरं सुराणां ब्रह्मादीनां मुनीनां च समाजम् प्रेक्ष्य प्रकर्षेण दृष्ट्वा । तत्र प्रसन्नस्येति तेषां धर्मसंस्थापनस्वविभूतित्वादनुग्रहोन्मुखस्येत्यर्थः । आस्येन्दोः मुखचन्द्रात् । आस्रवन्ती परितः प्रवर्तमाना । आस्येन्दुग्रहणेन 'वदनं वै जनोऽस्य' इत्युक्तेः जनोलोकत्वेनोपास्यस्य श्रीमुखस्यैवोपासनमपि कृतं वेदितव्यम् । वर-

वचनसुधा, सप्रसादस्य भगवद्वचनस्य निरतिशयतपःप्रार्थ्यत्वात् । 'देवाद्वृते वरः श्रेष्ठः' इत्यमरः । आस्ये चन्द्रत्वारोपात् वचने सुधात्वारोपः । ह्लादयेत् सुखयतु अत्र भाविकं परंपरितरूपकं च अलंकारः ॥ ३७ ॥

अथ जनोलोकरूपमुखावयवभूतं गण्डमण्डलमुपास्ते—

**कर्णस्थस्वर्णकम्रोज्ज्वलमकरमहाकुण्डलप्रोतदीप्य-**
**न्माणिक्यश्रीप्रतानैः परिमिलितमलिश्यामलं कोमलं यत्।**
**प्रोद्यत्सूर्यांशुराजन्मरकतमुकुराकारचोरं मुरारेः**
**गाढामागामिनीं नः शमयतु विपदं गण्डयोर्मण्डलं तत् ॥**

कर्णस्थयोः श्रवणपालीसंनिहितयोः स्वर्णकम्रयोः कनकमयत्वेन रम्ययोः अत एवोज्ज्वलयोः भासुरयोः मकरपत्राकारेण निर्मितयोः महतोः कर्णभूषणयोः; 'विद्युत्क्षिपन्मकरकुण्डलमण्डनार्हगण्डस्थलः' इत्यादिपुराणोक्तेः । प्रोतानां न्यस्तानां दीप्यतां द्योतमानानां माणिक्यानां पद्मरागरत्नानां श्रीप्रतानैः प्रभाविस्तारैः । परिमिलितं संजातपरिमलं सच्छायमिति यावत्; 'सरस्वत्युद्दामा वहति बहुमार्गा परिमलम्' 'न्यस्तं सिद्धाञ्जनपरिमलम्' इत्यादिप्रयोगात् । अलिश्यामलं भ्रमरवन्नीलवर्णम् । कोमलं मुग्धसंस्थानम् । प्रोद्यतः

उदयमानस्य बालस्येति यावत्; तदानीं मण्डलतया मणिसाम्यसिद्धेः; सूर्यस्यांशुभिः किरणैः राजतः; तेषां तत्प्रतिफलनेन स्फुरणात्; 'दर्पणनिर्मलासु पतिते घनतिमिरमुषि ज्योतिषि रूप्यभित्तिषु पुरः प्रतिफलति मुहुः' इति माघोक्तवत्; मरकतमुकुरस्य मरकतनिर्मितस्य दर्पणस्य य आकारः संस्थानं तस्यैव तस्करं हर्तृ; न तु शोभामात्रस्येति; अनेन साम्यसंपत्तिर्द्योत्यते; प्रतिफलितत्वश्यामलत्वे साधारणौ धर्मौ। गाढां महतीम्। आगामिनीम् उपर्यागन्तुमुन्मुखीम्। विपदं दुःखम्। शमयतु नाशयतु, सशरीरत्वस्वाभाव्यात्; 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतेः। 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति स्मृतेः सम्यग्ज्ञानदानेन शरीरान्तरपरिग्रहमस्माकं निवारयत्वित्यर्थः प्रकाश्यते। गण्डयोः कपोलयोर्मण्डलं वृत्तं संस्थानम्। अत्र दृष्टान्तोऽलंकारः। माणिक्यश्रीगण्डमण्डलयोः सूर्यांशुमरकतमुकुरयोश्च बिम्बप्रतिबिम्बभावेन निर्देशात्; निदर्शना च, आकारधारणस्य साम्ये पर्यवसानात् ॥ ३८ ॥

अथ 'नासावश्विनौ' इति सावित्रीहृदयोक्तेः 'नासत्यदस्रौ परमस्य नासे घ्राणं च गन्धः' इति श्रीभागवतोक्तेश्च

नासत्यत्वेनोपास्यौ नासापुटौ गन्धतन्मात्रत्वेनोपास्यं घ्राणं च उपास्ते—

**वक्त्राम्भोजे लसन्तं मुहुरधरमणिं पक्वबिम्बाभिरामं**
**दृष्ट्वा दष्टुं शुकस्य स्फुटमवतरतस्तुण्डदण्डायते यः ।**
**घोणः शोणीकृतात्मा श्रवणयुगलसत्कुण्डलोस्रैर्मुरारेः**
**प्राणाख्यस्यानिलस्य प्रसरणसरणिःप्राणदानाय नःस्तात् ॥**

वक्त्राम्भोजे मुखकमले लसन्तम् अनुक्षणं स्फुरन्तम्, स्फुरणस्याधरगुणत्वात्; 'कामप्यभिख्यां स्फुरितैरपुष्यदासन्न-लावण्यफलोऽधरोष्ठः' इत्याद्युक्तेः । अधरमणिं पक्वबि-म्बाभिरामं परिणतबिम्बिकालताफलमिव स्निग्धारुणत्वात् मध्ये स्थूलत्वात्, उभयतः क्रमप्रभूततनुत्वाच्च रमणीयम् । अत एव तत्फलवत् भ्रमजनकत्वं सिध्यति । तदा तं दृष्ट्वा दष्टुं खण्डयितुम् अवतरतः, शुकानां बिम्बफ-लप्रियत्वात् 'तरुणि येन तवाधरपाटलं दशति बिम्ब-फलं शुकपोतकः' इत्याद्युक्तेः । शुकस्य ताम्रतुण्डस्य । स्फुटं तुण्डायते चञ्चुवदाचरति, वृत्तोत्तुङ्गताम्रतया च नील-वर्णस्य भगवद्घ्राणदण्डस्य स कथमुपमानत्वमर्हति, इत्यत्राह— श्रवणयुगलसत्कुण्डलोस्रैः कर्णपालीद्वये स्फुरतोः कुण्डलयोः, तयोर्माणिक्यमयत्वेन पूर्वश्लोके प्रतिपादितत्वात् शोणवर्णैः

किरणैः शोणीकृतात्मा अरुणीकृतमूर्तिः । घोणः नासादण्डः । ‘शिरोवदनवृत्ते दृक्शब्दश्रवणघोणगण्डोष्ठद्वयेषु सशिरोमुखेषु च इति न्यसेन्मन्त्रवित्’ इत्याद्यभियुक्तोक्तेः पुंलिङ्गतोपपद्यते । प्राणाख्यस्य नाभेरूर्ध्वं प्रवर्तनात् प्राणनाम्नः । अनिलस्य वायोरित्यनेन एकस्यैव वायोरूर्ध्वाधोगमनादिवृत्तिभेदात् प्राणापानादिव्यवहार इति व्यञ्जयति । प्रसरणसरणिः प्रवृत्तिमार्गः उत्पत्तिस्थानमित्यर्थः । ‘नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुः प्राणो भूत्वा नासिके प्राविशत्’ इति श्रुतेः, ‘अनन्तवीर्यश्वसितं मातरिश्वा’ इति पुराणवचनाच्च । य इत्युक्ते स इत्यायाति । नः प्राणदानाय जीवितं दातुम् । स्तात् भवतु । आशिषि लोट् । भगवद्भक्तेरेव जन्मफलत्वात् तदभावे श्वसच्छवत्वात् तद्दानमेव प्राणदानमिति भावः । ‘तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मघातः’ ‘आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ । तस्यर्ते यः क्षणो नीत उत्तमश्लोकवार्तया’ इत्यादिपुराणवचनात् । अत्र वक्त्राम्भोजे अधरमणिमिति च केवलं नियमरूपकम् । पक्वबिम्बाभिराममित्यत्र भ्रान्तिभ्रान्तं दृष्ट्वा तुण्डदण्ड इवेत्युत्प्रेक्षा । क्यङोऽप्युपमा उत्प्रेक्षायां पर्यवस्यति । शोणीकृतात्मेत्यत्र तद्गुणः, स च भ्रान्तिमुत्थापयतीति अङ्गाङ्गिभावेन संकरोऽलंकारः ॥ ३९ ॥

अथ रवीन्दुरूपेणोपास्ये श्रीमल्लोचने उपास्ते—

**दिक्कालौ वेदयन्तौ जगति मुहुरिमौ संचरन्तौ रवीन्दू**
**त्रैलोक्यालोकदीपावभिदधति ययोरेव रूपं मुनीन्द्राः।**
**अस्मानब्जप्रभे ते प्रचुरतरकृपानिर्भरं प्रेक्षमाणे**
**पातामाताम्रशुक्लासितरुचिरुचिरे पद्मनेत्रस्य नेत्रे ॥**

दिशः प्राच्याद्याः कालमहोरात्रादिम् । वेदयन्तौ स्वचारेण ज्ञापयन्तौ; स्वोदयास्तमयोपाधिजन्यत्वात् प्राच्यादिव्यवहारस्य । यथाह मुरारिः— 'औपाधिकप्राच्यादिव्यवहारबीजविरहाद्दिङ्मात्रमेव स्थितम्—' इति । मूलत्वाच्च अहोरात्रादिव्यवहारस्य, 'उदयास्तमयाभ्यां हि स्मृते पूर्वापरे दिशौ' इति, 'अहोरात्रव्यवस्थानकारणं भगवान् रविः' इति च श्रीविष्णुपुराणवचनात् । चन्द्रस्याप्युपलक्षणमेतत् । तत्र हेतुः— जगति मुहुः संचरन्तौ, लोके अनुक्षणमविश्रान्त्या पर्यटन्तौ । वेदयन्तावित्यनेन दिक्कालापेक्षत्वात् वैदिकतान्त्रिककर्मानुष्ठानस्य तज्ज्ञानस्य च एतदधीनत्वात् आमुष्मिकसुखरूपपरमोपकारकर्तृत्वं द्योत्यते । विपर्यये धर्मोच्छेदात् जगदुच्छेदः । संचरन्तावित्यनेन परोपकारैकतात्पर्यं स्वसुखनिरभिलाषत्वं च व्यज्यते । इमाविति देवतान्तरवत्

नानुमानसाध्यत्वमात्रमनयोः; अपि तु प्रत्यक्षप्रमाणसिद्धत्वात् नास्तिकनिवहनिरसनरभसशरभत्वं च प्रकाश्यते। तेभ्योऽनयोः कोऽतिशयः, इत्यत्राह— त्रैलोक्यालोकदीपौ, त्रैलोक्यस्य भूर्भुवःस्वरात्मनः लोकत्रयस्य आलोके प्रकाशने दीपवत् प्रवृत्तेर्दीपौ। अतः अनयोः प्रवृत्त्यभावे सर्वस्य व्यवहारोच्छेदप्रसङ्गः इति दृष्टमुखेनाप्युपकारगौरवं प्रकाश्यते। रवीन्दू सूर्याचन्द्रमसौ; अभ्यर्हितत्वात् पूर्वनिपातः। ययोः नेत्रयोः। रूपं तात्त्विकं स्वरूपमेव; तत्र न कस्यचिद्विमतिरित्यर्थः। मुनीन्द्राः दिव्यचक्षुःसंपन्नतया मुनीनां श्रेष्ठाः पराशरादयः। मौनान्मुनिर्भवति न अरण्यवासान्मुनिः, 'अक्षरं तत्तु यो वेद स मुनिश्रेष्ठ उच्यते' इति महाभारतोक्तेः। अभिदधति कथयन्तीति, 'चक्षुषी चन्द्रादित्यौ' 'अक्ष्णोः सूर्यो अजायत' इत्यादिश्रुतिमुखेन 'अक्ष्णोः सूर्योऽनिलः प्राणात्' 'अनन्तबाहुं शशिसूर्यनेत्रम्' इत्यादिस्मृतिमुखेन च इत्यर्थः। 'विभुरिन्द्वर्कविलोचनः किलासौ' 'कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने' इत्यादिमहाकविवचनात्। अब्जप्रभे पद्मसदृशशोभे; अब्जशब्देनात्र सिताम्भोजमुच्यते, सामर्थ्यात्। अत आह—आताम्रशुक्लासितरुचिरुचिरे अपाङ्गदेशे सितभागे तारकायां च क्रमात् रक्तया शुक्लया

कृष्णया च रुच्या रुचिरे शोभने; पुण्डरीकस्यापि केसरदल-भ्रमरविशिष्टतया वर्णत्रययोगादौपम्योपपत्तिः । नेत्रे लोचने । पातां रक्षताम् । कथं रक्षणं क्रियत इत्यत्राह—प्रचुरतरकृपानि-र्भरम्, देवतान्तरेभ्यो भगवतः कारुणिकत्वातिशयात् स्वतः प्रचुरया अत्यन्ताधिकया कृपया दयया 'हन्त दुःखितोऽयं तपस्वी तदस्माभिः पालनीयः' इति बुद्धया निर्भरं समग्रं यथा तथा। न तु कटाक्षमात्रेण; किंतु प्रेक्षमाणे प्रकर्षेण पश्यतः इति हेतौ शानच् । अथवा, वर्तमाननिर्देशात् तथाविधस्य स्वाभाव्यमाह तत्र । रूपकम् उपमा च अत्र अलंकारः ॥

अथ 'तद्भ्रूविजृम्भः परमेष्ठिधिष्ण्यम्' इति वचनात् ब्रह्म-लोकत्वेनोपास्यं भ्रूयुगमुपास्ते—

**पातात्पातालपातात्पतगपतिगतेर्भ्रूयुगं भुग्नमध्यं**
**येनेषच्चालितेन स्वपदनियमिताः सासुरा देवसङ्घाः ।**
**नृत्यल्लालाटरङ्गे रजनिकरतनोरर्धखण्डावदाते**
**कालव्यालद्वयं वा विलसति समया वालिकामातरं नः ॥**

पातात् रक्षतात् । पातालपातात् रसातलोपलक्षिते निरये यः पातः दुष्कर्मपरतन्त्रतया गमनं तस्मात् । 'ततश्च नरका विप्र भूयो वै..... । पापिनो येषु पात्यन्ते ताञ्छृणुष्व महा-

मुने' इति श्रीविष्णुपुराणवचनात् । पतगपतिगतेः पक्षिराजेन गरुडेन वाहनभूतेन गमनं यस्य तस्य भगवतः । भ्रूयुगं चिल्लीद्वयम् । भुग्नमध्यं कुटिलमध्यम् । 'भुजकौटिल्ये' इत्यस्मान्निष्ठा । तदित्यायाति । ईषच्चालितेन कोपसूचकतया किंचित् कम्पितेन स्वपदनियमिताः स्वे पदे निजे अधिकारे नियन्त्रिताः अस्वातन्त्र्येण स्थापिता इत्यपि । विनयोपक्रमात् भगवद्भयाच्च स्वाधिकारादचलत्वं च द्योत्यते, 'भीषास्माद्वातः पवते । भीषोदेति सूर्यः' इति श्रुतेः । सासुराः असुरैः वैरोचन्यादिभिः सहिताः । देवसंघाः इन्द्रादिदेवसमूहाः । देवासुरग्रहणं प्राधान्यात्; अन्येषां कैमुतिकन्यायेन नियमनासिद्धेः; 'तेन विना तृणाग्रमपि न चलति' इति वचनात् । नृत्यत् विलासेन चलत् लालाटरङ्गे लालाटं ललाटस्यादूरभवं तत्प्रान्तमित्यर्थः । तन्मये नृत्यमण्डपे 'अदूरभवः' इत्यण् । स्वार्थे वा ललाटमेव लालाटम्— प्रतिभैव प्रातिभमित्यादिवत् । रजनिकरतनोः पूर्णचन्द्रमूर्तेः । अर्धखण्डावदाते 'अर्धं नपुंसकम्' इति स्मृतेः समोंऽशोऽर्धखण्डः । 'शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके' इत्यमरः । प्रान्तार्थत्वे मूर्धन्यखण्ड एकदेश इत्यर्थः तद्वच्छुद्धलावण्ये अष्टमीचन्द्रसुन्दरे इत्यर्थः । महापुरुषललाटस्याष्टमीचन्द्रसाम्यप्रसिद्धेः । कालव्यालद्वयं वा

कृष्णसर्पयोर्युगमिव । 'वा विकल्पोपमानयोः समुच्चये च' इति वैजयन्ती । शोभते लसति । चकारो येनेत्युक्तस्य विपरिणामेन यच्चेत्यनुकर्षणार्थः । वालिका कर्णभूषणविशेषः 'वालिका कर्णपृष्ठे स्वे' इति वैजयन्ती ; 'वकुलफलानुकारिणीभिस्तिसृभिर्मुक्ताभिर्विरचितेन वालिकायुगलेन' इति हर्षप्रयोगाच्च । सैव माता जननी कालव्यालद्वयस्येत्यर्थात् ; वालिकायाः कुटिलायतत्वात् व्यालीसाम्यात् । तां समया तस्याः समीपे ; 'अभितः परितः समयानिकषाहाप्रतियोगेषु च दृश्यते' इति द्वितीया । अयमर्थः—कर्णपृष्ठस्थयोर्वालिकयोः समीपे ललाटरङ्गे नृत्यत् यच्च भ्रूयुगं स्वजनन्योर्वालिकयोः परिसरे हर्षान्नृत्यतोः कालव्यालयोर्द्वयवत् लसति, तत् भ्रूयुगं नः पातु इति । अत्रोत्प्रेक्षालंकारः । स्वाभाविकस्निग्धनीलायतत्वं भुग्नमध्यत्वं च उत्प्रेक्षानिमित्तम् । सौम्यत्वेऽपि सकलप्रपञ्चभयजनकत्वं च व्यङ्ग्यम् ॥ ४१ ॥

पुनः प्रकारान्तरेण भ्रूलते उपास्ते—

**लक्ष्माकारालकालिस्फुरदलिकशशाङ्कार्धसंदर्शमील-**
**न्नेत्राम्भोजप्रबोधोत्सुकनिभृततरालीनभृङ्गच्छटाभे ।**
**लक्ष्मीनाथस्य लक्ष्यीकृतविबुधगणापाङ्गबाणासनार्ध-**
**च्छाये नो भूरिभूतिप्रसवकुशलते भ्रूलते पालयेताम् ॥**

लक्ष्म लाञ्छनं तस्य आकारः संस्थानं स इव आकारो यस्यास्तया अलकाल्या कुन्तलावल्या स्फुरतः शोभमानस्य अलिकरूपस्य शशाङ्कार्धस्य; 'अर्धं नपुंसकम्' इति समांशवाचिनो अर्धशब्दस्य पूर्वनिपाते प्राप्तेऽपि 'प्रेम्णा शरीरार्धहरां हरस्य' इति, 'दिनार्धभाजः परिवेषिणोऽर्कात्' इत्यादिप्रयोगबाहुल्यदर्शनात् साधुत्वम्; संदर्शनेन सम्यग्दर्शनेन मीलतोः मुकुलीभवतोः, मीलतोरित्युक्तेरसमग्रमीलनत्वमुच्यते, स्वरूपानुसंधानत्वान्निद्रायाः; नेत्राम्भोजयोः नयनरूपयोः पद्मयोः; संदर्शनमीलनमिति योगनिद्रावशात् स्वतो मीलनं संदर्शनहेतुकमिति संनिकर्षणादतिशयोक्त्या अध्यवसीयते; 'चन्द्रदर्शननन्दितायाः स्मितप्रभामिव वनश्रियः' इति कादम्बरीप्रयोगवत्। चन्द्रदर्शने पद्मस्य मीलनं प्रसिद्धम्। प्रबोधे विकासे उत्सुका उत्कण्ठिताः; अत एव निभृततरालीना अतिनिश्चलं समीपलग्ना; तत्प्रतिपालनेनेत्यर्थात् गम्यते। भृङ्गच्छटा भ्रमरमाला तस्या आभा शोभेव आभा ययोः; स्निग्धनीलायतत्वात् समीपगतत्वाच्च उत्प्रेक्षा। लक्ष्यीकृतः शरव्यं कृतः सेवार्थमागतो विबुधगणो देवसमूहो येन तस्यापाङ्गस्य कटाक्षस्य बाणासनार्धं धनुरेकदेशः तस्य छायेव छाया शोभा ययोः। अर्धग्रहणमपाङ्गमोक्षस्य भ्रूकोटिमात्रसंबन्धात्। बाणास-

नर्धच्छाये इति वा पाठः ; बाणासनवद्वा छाया ययोरित्यर्थः । भ्रूलताया बाणासनत्वोत्प्रेक्षणात् एकदेशविवर्तनादपाङ्गस्य बाणत्वप्रसिद्धिः । अथवा, अपाङ्गबाणस्य आसनम् आसः धनुः तदर्धच्छाये इति योजना ; 'अस्त्रियौ चापधनुषौ आसेष्वासौ धनुर्भ्रुवोः' इति वैजयन्त्यामास इत्युक्तेः, 'असु क्षेपणे' इति धातोर्घञि ल्युटि वा आसासनयोः सिद्धेरर्थाभेदाच्च आसनमिति प्रयोगः ; 'इष्वास इष्वसनम्' इति च प्रयोगात् । भूरिभूतिप्रसवकुशलते भूतिप्रसवे अभ्युदयनिःश्रेयसरूपपरमैश्वर्यसृष्टौ भक्तानामित्यर्थात् कुशलता वैदग्ध्यं भूरिः बह्वी । अथवा भूरेः भूतेः प्रसवे कुशलता ययोः । भ्रूलते भ्रुवोर्लते । अग्रे इति अर्ध इति वा पाठे तनुतरत्वात्पक्ष्मणाम् । ऋद्धे इति तु पाठे लतातुल्ये चिल्ल्यावित्यर्थः । पालयेतामित्याशिषि प्रार्थने वा लिङ् । अत्र लक्ष्माकारालकालीत्युपमया अथवा अपह्नुत्या अलिकशशाङ्कार्धेति रूपकमुत्थाप्यते । तेन च भ्रान्तिमान् । तन्मूलेन मीलनेन नेत्राम्भोजे रूपकम् । ततश्च उत्प्रेक्षा इत्यङ्गाङ्गिभावेन संकरोऽलंकारः । प्रबोधोत्सुकत्वम् उत्प्रेक्षानिमित्तं जात्युत्प्रेक्षा चेयम् । अपाङ्गबाणेत्यत्रापि रूपकोत्थापितोत्प्रेक्षा । आभाच्छायाभ्यामुपक्रान्ता आपाततः प्रतीतापि उपमा पुनरर्थानुसरणवशादुत्प्रेक्षायां पर्यवस्यति ॥ ४२ ॥

अथ भगवतः सावित्रीरूपं तिलकमुपास्ते—

**रूक्षस्मारेक्षुचापच्युतशरनिकरक्षीणलक्ष्मीकटाक्ष-**
**प्रोत्फुल्लत्पद्ममालाविलसितमहितस्फाटिकैशानलिङ्गम् ।**
**भूयाद्भूयोविभूत्यै मम भुवनपतेर्भ्रूलताद्वन्द्वमध्या-**
**दुत्थं तत्पुण्ड्रमूर्ध्वं जनिमरणतमःखण्डनं मण्डनं च ॥**

रूक्षत्वं स्नेहगुणरहितत्वम् । तेनात्र निर्दयत्वं लक्ष्यते । रूक्षैर्निर्दयैः मर्मणां तुद्यमानत्वात् । स्मारात् कामसंबन्धिनः । इक्षुचापात् इक्षुकाण्डमयाद्धनुषः । च्युतैः प्रवृत्तैः । शरनिकरैः बाणसमूहैः, निकरग्रहणं द्रावणक्षोभणवशीकरणाकर्षणसंमोहनरूपकर्मपञ्चकनिपुणपञ्चविधबाणत्वेन निमित्तेन पञ्चबाणप्रवृत्तेः, तथाविधानां शराणामनन्तत्वाच्चेति ग्राह्यम् । 'स्वेच्छोपजातविषयोऽपि न याति वक्तुं देहीति मार्गणशतैश्च ददाति दुःखम्' इति, 'स्मरशरशतप्रहारजर्जरिते हि मनसि जलमिव गत्युपदिष्टम्' इत्यादिमहाकविप्रयोगानामन्यथा वैयर्थ्यापातात् । क्षीणायाः क्लेशितायाः ; भगवत आत्मारामत्वात् स्वतन्त्रत्वाच्च तस्यास्तद्रूपादिगुणगणवशीकृततया स्त्रीस्वभावाच्च, भोगलिप्सोः स्वेच्छोपभोगसुखस्य दौर्लभ्यात् क्षीणत्वकथनम् । 'न श्रीर्विरक्तमपि मां विजहाति तस्याः प्रेक्षालवार्थ इतरानियमोऽर्हणेन' इति श्रीभागवतोक्तेः । 'दि-

ह्योरुवि आणेणविआ सहस्सत्थ णवेल्लणेविविसहिअजस्स णिस्सणावि इतरे विरीएउरेपेम्मेण उहूइओ अप्पाणो.' इत्यादिवचनैः। लक्ष्म्याः यः कटाक्षः तद्रूपया प्रोत्फुल्लत्पद्ममालया विकसितमिति शत्रा नवविकाससुभगत्वं व्यज्यते। कमलानां मालया विकसितं शोभितम्। महितं पूजितम्। स्फाटिकं स्फटिकमणिनिर्मितम् ऐशानम् ईशानः शिवः तदीयम्। लिङ्गं वृत्तोन्नतनिर्विवरविमलत्वात् दीपाकारत्वाच्च अतिशयोक्त्यानुद्भावोऽध्यवसीयते। स्फाटिकत्वोक्तेः कर्पूरपङ्कादिविरचितत्वं पुण्ड्रस्य प्रतीयते। नयनवदनपुण्डरीकस्य पुण्ड्रकवशात् सविशेषकमनीयत्वेन साग्रहं सलज्जं च कटाक्षैर्यद्दर्शनं तत् स्मरविजयिने भगवते परमेश्वराय स्मरदुर्विलसितं तन्नियमनाय निवेदयन्त्यास्तत्प्रसादनार्थं पद्ममालया समर्चनमेवेत्यध्यवसीयते। अथवा लिङ्गमिवेति द्योतकशून्योत्प्रेक्षा। भूयः बहुतरमिति क्रियाविशेषणम्, 'बहोर्लोपो भू च बहोः' इति भूभावे ईयसुनि च रूपम्। विभूत्यै विशिष्टैश्वर्याय; कैवल्यसुखायेत्यर्थः। भुवनपतेः ब्रह्मादिस्तम्बपर्यन्तस्य जगतो नियन्तुः। भ्रूलताद्वन्द्वमध्यात् उत्थं भ्रूयुगस्य मध्यात् नासादण्डमूलदेशोपरिभागादुद्भूतम्। ऊर्ध्वमलिकान्तं यावदुपरि प्रसृतम्। अनेनाज्ञासंज्ञात् भ्रूमध्याधारमूर्ध्वं प्रवृत्तस्य परतेजसोऽनुसंधानाय तत्प्रतिमारूपेणेदं सद्भिर्धार्यत इति पुण्ड्रधारणवास-

नापि सूचिता । अत आह जनिमरणतमःखण्डनं भक्तानां जननमरणरूपस्य तिमिरस्य नाशकं स्वरूपतिरोधायकत्वात् तमस्त्वारोपः । मण्डनं सविशेषशोभाजनकत्वात् भगवन्मुखेन्दोर्भूषणान्तरेभ्यः प्रकृष्टं भूषणं च पुण्ड्रं तिलकविशेषः 'तिलकं तमालपत्रकमुक्ताविशेषकं पुण्ड्रम्' इति हलायुधः । अत्र रूपकमतिशयोक्तिरुत्प्रेक्षा चालंकारः ॥ ४३ ॥

अथ सावित्रीरूपतिलकाधारत्वेनोपास्यं ललाटतटमुपास्ते । 'तपोललाटं विदुरादिपुंसः' इति पुराणवचनात्—

**पीठीभूतालकान्तं कृतमकुटमहादेवलिङ्गप्रतिष्ठे**
**लालाटे नाट्यरङ्गे विकटतरतटे कैटभारेश्चिराय ।**
**प्रोद्धाट्यैवात्मतन्द्रीप्रकटपटकुटीं प्रस्फुरन्ती स्फुटाङ्गं**
**पट्वीयं भावनाख्यां चटुलमतिनटी नाटिकां नाटयेन्नः॥**

पीठीभूतं पीठं जातम् अलकान्तं ललाटस्यावसानमलकमूलं यथा तथेति क्रियाविशेषणम् । कृता अनुष्ठिता मकुटं किरीटं तद्रूपस्य महादेवलिङ्गस्य परमेश्वरज्योतिर्लिङ्गप्रतिच्छन्दस्य प्रतिष्ठापनं यत्र मकुटस्यापि वृत्तोन्नतप्रभामयत्वादिभिर्लिङ्गत्वारोपः । लालाटे ललाटात्मके नाट्यरङ्गे नृत्तमण्डपे । विकटतरतटे अतिविस्तीर्णस्थले । कैटभारेः भगवतः ।

प्रोद्धाट्य प्रकर्षेण दूरतोऽपसार्य । एवकारेण तदभावे नटनदर्शनस्याशक्यत्वात् प्रथमतः प्रोद्धाटनमवश्यं कर्तव्यमिति प्रकाश्यते । आत्मतन्द्रीप्रकटपटकुटीं स्वीयां तन्द्रीं कर्तव्याकर्तव्येष्वप्रवृत्तिरूपां मन्दतामेव प्रकटां स्पष्टां पटकुटीशब्देन पटमण्डपवाचकेनापि अत्र यवनिका विवक्ष्यते। यवनिकाप्रोद्धाटनफलमाह—स्फुटाङ्गं प्रस्फुरन्ती रजस्तमोविरहात् स्पष्टावयवं यथा तथा प्रकर्षेण प्रकाशमाना । मतेरवयवा भक्तिविरक्त्यादिगुणाः नस्याः करचरणाद्यङ्गानि । पट्वी अन्तरायनिरसनेन सबला भूत्वेति शेषः । चटुलमतिनटी 'चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्' इत्युक्तक्रमेण विषयेषु लोला मतिरेव नटी लासिका । भावनाख्यां सदानुसंधानसंज्ञाम् । 'नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना' 'सनन्दनादयो भूप ब्रह्मभावनया पुरा' 'ये भावयन्त्यमृतवाहिभिरंशुजालैः' इत्यादिवचनैः भावनाया वासनार्थत्वावगमात् । नाटिकां नाटकप्रकरणलक्षणविशेषसंकीर्णं प्रबन्धविशेषम् । 'तत्र वस्तुप्रकरणान्नाटकान्नायको नृपः । देवी तत्र भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा । नायिका तादृशी मुग्धा दिव्या वातिमनोहरा । कैशिक्यङ्गैश्चतुर्भिश्च युक्ताङ्कैरिव नाटिका' इति धनिकोक्तेः । नर्मतत्पुञ्जतत्स्फोटतद्गर्भैश्चतुरङ्गिका इत्युक्तानि कैशिक्यङ्गानि । नाटयेत् अभिनयेत् प्रयुञ्ज्यामि-

त्यर्थः । 'स्फटिककटकभूमिं नाटयत्येष शैलः' इति माघोक्तवत् । पट्टी सती चिराय भावनाख्यां नाटिकां नाटयेदिति विशिष्टे प्रार्थना । उत्तमदेवतासंनिधावेव देवताप्रीणनस्य नाट्यप्रयोगस्य मुख्यत्वम्, अन्यत्रामुख्यत्वमिति द्योतयितुं कृतमकुटमहादेवलिङ्गप्रतिष्ठे इत्युक्तम् । अत्र समस्तवस्तुविषयं सावयवरूपकमलंकारः ॥ ४४ ॥

अथ 'ईशस्य केशान् विदुरम्बुवाहान्' इत्युक्तरीत्या उपास्यामलकावलीमुपास्ते, केशसंस्थानविशेषत्वात्तस्याः—

**मालालीवालिधाम्नः कुवलयकलिता श्रीपतेः कुन्तलाली**
**कालिन्द्यारुह्य मूर्ध्नो गलति हरशिरःस्वर्धुनीस्पर्धया नु ।**
**राहुर्वायाति वक्त्रं सकलशशिकलाभ्रान्तिलोलान्तरात्मा**
**लोकैरालोक्यते या प्रदिशतु सततं साखिलं मङ्गलं नः ॥**

अलिधाम्नः भ्रमरवन्नीलप्रभस्य श्रीपतेः कुन्तलाली कुन्तलपङ्क्तिः, 'कुटिलकुन्तलस्तबकमालिना मौलिना' इत्यादिप्रयोगात् । सा कुन्तलाली मङ्गलं प्रदिशत्वित्यन्वयः । या लोकैरित्थमालोक्यते । आलोकनप्रकारमाह— कुवलयकलिता नीलोत्पलैर्ग्रथिता मालाली मालानामावलिः । वा-शब्दो विकल्पे । हरशिरःस्वर्धुनीस्पर्धया, लोके हि तु-

ल्यगुणयोरेकस्योत्कर्षमन्यो यथा न सहते तथा 'गङ्गा च यमुना च' इति सहपठितयोरावयोर्मध्ये गङ्गा परमेश्वरस्य त्रिभुवनदुर्लभं कपर्दभारमावसति, अतोऽहमपि ततः परं स्थानमध्यासिष्ये— इति शिवमौलिगतया स्वर्धुन्या स्वर्गनद्या गङ्गया स्पर्धा संघर्षः तया हेतुना । आरुह्य अधिरुह्य मूर्धानमेवेत्यर्थात् । कालिन्दी यमुना । मूर्ध्नः शिरसः । श्रीपतेरिति सर्वत्र संबध्यते । गलति प्रवाहबाहुल्यात् सर्वतः क्षरति । नुर्विकल्पे । सकलशशिकलाभ्रान्तिलोलान्तरात्मा सकला समुदिता शशिनः चन्द्रस्य कला पूर्णमण्डलमिति यावत्, कलासामग्र्या एव मण्डलत्वात । तद्भ्रान्त्या चन्द्रमाः— इत्यन्यथाबुद्ध्या लोलः अमृतास्वादवाञ्छया तरलः अन्तरात्मा मनो यस्य । राहुः सैंहिकेयः । वा-शब्दोऽत्र विकल्पे । वक्त्रं मुखमायाति प्राप्नोति । इति-शब्दोऽध्याहार्यः । लोकैः लोकयन्ति दिव्यचक्षुषा भगवन्मूर्तिं पश्यन्तीति लोकाः परमयोगिनः तैः । आलोच्यते वितर्क्यते 'मुह्यन्ति यत्सूरयः' इति, 'सैषा भगवतो माया ज्ञानिनामपि मोहिनी' इत्यादिवचनैः तैरप्यद्यापि निर्णेतुमशक्यत्वात् । प्रदिशतु ददतु । सततं सदा अखिलं 'खिलमप्रहतं स्थानम्' इत्यमरः । खिलं न भवतीत्यखिलम्; उपभोगार्हम, अथवा संपूर्णम् । मङ्गलं भक्तिज्ञानादिरूपं

कल्याणम् । अत्र तु शुद्धसंदेहोऽलंकारः । उत्प्रेक्षा वा ॥

अथ भगवतः केशानेव संस्थानभेदविशिष्टानुपास्ते—

**सुप्ताकाराः प्रसुप्ते भगवति विबुधैरप्यदृष्टस्वरूपाः**
**व्याप्तव्योमान्तरालास्तरलमणिरुचारञ्जिताःस्पष्टभासः ।**
**देहच्छायोद्गमाभा रिपुवपुरगरुप्लोषरोषाग्निधूम्याः**
**केशाः केशिद्विषो नो विदधतु विपुलक्लेशपाशप्रणाशम् ॥**

सुप्ताकाराः शोभनजटारूपाः, भगवतः परमतपस्वित्वात् ; 'समुक्तामणिविद्योतं सचन्द्राम्भोदवर्चसम् । जटाया मण्डलं कृत्स्नं बिभ्रत् कृष्णवपुर्हरिः' इति श्रीहरिवंशोक्तेः । 'सुप्ता जालिनी गरुडा जटा' इति वैजयन्ती । प्रसुप्ते स्वप्तुमारब्धे । आदिकर्मणि क्तः । भगवति तस्मिन्निति विशेष्योऽध्याहार्यः । तस्मिन् केशिद्रुहीत्यर्थः ; केशिद्विषोऽन्यत्र प्रतीतेः । विबुधैः देवैरप्यदृष्टस्वरूपाः, ईदृक्तया च न प्रत्यक्षीकृतं स्वरूपं तात्त्विकं संस्थानं येषाम्, तैरपि स्थूलाकारस्यैव दृश्यमानत्वात् । बुध अवगमने इत्यस्मात् 'इगुपधज्ञाप्रीकिरः कः' इति के रूपम् । विशेषेण सर्वं बुध्यन्त इति प्रसिद्धानामियं दशा । किं पुनरन्येषामित्यपिना व्यज्यते । 'यन्नायं भगवान्ब्रह्मा जानाति परमं पदम्' इति, 'नान्तं न मध्यं न पुनस्त-

वादिं पश्यामि विश्वेश्वर सर्वरूप' इत्यादिवचनैः । तत्र हेतुः— व्याप्तव्योमान्तरालाः निर्विवरीकृतो गगनमध्यप्रदेशो यैः । विबुधानामपि स्वशक्त्यनुरूपं व्योमैकदेश एव संचरणादिति भावः । तरलमणिरुचा औचित्याल्ललाटबन्धादिभूषणमध्यनायकभूतमहानीलप्रभया । रञ्जिताः स्पष्टभासः रञ्जिताः रूषिताः । अप्यदृष्टस्वरूपा इत्यनेन श्रीहरिवंशकथा अनुस्मार्यते । यथा— 'तारकामयसमरभुवि सकलमसुरकुलमतिनिशितरथचरणमुखशिखिनिवहविरहितमहमरगणमपि निजपदमनुनिहितमतिमुदितहृदयमलमलघुविदधदुदधिदुहितृपतिरमृतजलधिसलिललहरिविहरणरसिकमृदुलसुरभिपवनशिशिरितबृहदुपवनसततविततषड्तुविभवमनवरतनितरसनकमुखविबुधमुनिजननमरणशरणमनुपमरुचिनिजपदमुपगतोरुफणफलकमणितरणिततघृणिपटलमजटिलितहरिदुदरमुरगशयनमभजत । तदवसर उपचितबलमजितहतमसुरकुलममितविभवनृपतिसुतमिषमवनितलमवतरदतुलबलविततिभिरधिकभरजनकममरजनसुहृदमवनिपुरसुरभिनिवहमवनिवलयमपि भृशविधुरमकुरुत । तत उदितहृदयरुजमनिमिषकुलयममृतजलधिमुपगतमजितविचयपरमपरिमितशरनटनपरमसुररिपुवपुरधिगमविधुरमतिकदनममृततदवगमजनितकरुणमतिरसुररिपुरथ निजवपुरखिलदुरितशमनममृतमयमिव पुरत उपदधदमरपरिषदरमयत्'—

इति । श्रीहरिवंशे 'तत्रायं प्रविशन्नेव जटाभारं समुद्वहन् । स सहस्रशिरो भूत्वा शयनायोपचक्रमे । विवृतात्तस्य वदनान्निश्वासपवनेरिताः । मेघानां पङ्क्तयो व्योम्नि निष्पतन्ति सहस्रशः । तन्न वेद स्वयं ब्रह्मा नापि ब्रह्मर्षयोऽमलाः । विष्णुर्निद्रामयं योगं प्रविष्टस्तमसावृतम्' इति । देहच्छायोद्गमाभाः भगवन्मूर्तेः स्निग्धनीलवर्णत्वादूर्ध्वं प्रवृत्ताः तत्प्रभा इवेति संभाव्यमानाः । रिपुवपुरगरुप्लोषरोषाग्निधूम्याः शत्रुशरीररूपमगरुं कालागरुद्रुमं प्लोष्टुं दग्धुं शीलं यस्य । 'प्लुष दाहे' इत्यस्मात् 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । तस्य रोषाग्नेः क्रोधात्मकस्य वह्नेः धूम्याः धूमस्य संचयाः 'धूम्या वात्या तु तद्वृन्दे सर्वम्' इति वैजयन्ती । रोषाग्नेरान्तरत्वात् धूमस्योर्ध्वप्रवृत्त्यौचित्यम् । अगरुधूम्याग्रहणं भगवत्केशानामपि परिमलबहुलत्वात् कार्ष्ण्यातिशयाच्च । केशाः शिरोरुहाः । केशिद्विषः केशिसंज्ञं तुरगरूपमसुरं हतवतः । केशिद्विष इति रोषाग्निना केशैश्च संबध्यते । विपुलक्लेशपाशप्रणाशम् । विपुला विस्तीर्णाः अनेकजन्मानुभाव्यदुःखहेतुत्वात्, बहुलभेदत्वाच्च । अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः— इति स्मृताः तमोमोहमहामोहतामिस्रान्धतामिस्रापरपर्यायाः पञ्च क्लेशाः । प्रकृतिमहदहंकारतन्मात्ररूपेऽनात्माष्टके आत्मधीस्तमः अविद्या च, अणिमाद्यैश्वर्याष्टके लब्धे ममत्वं मोहोऽस्मिता च,

दिव्यमानुषत्वेन दशविधेषु शब्दादिविषयेषु सक्तिः महामोहो रागश्च, ऐश्वर्याष्टकस्य च प्रतिहत्या विकारस्तामिस्रो द्वेषश्च; एषामेव भोगान्तराले नाशभीतिः अन्धतामिस्रोऽभिनिवेशश्च। अथवा, अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः अविद्या, दृग्दर्शनशक्त्योरेकात्मिकेव स्मिता, सुखानुशयी रागः, दुःखानुशयी द्वेषः, स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः—इति लक्षिताः क्लेशाः। तद्रूपाणां पाशानां बन्धरज्जूनाम्, ऊर्ध्वाधःकर्षणसाधनत्वात्; 'पुण्यरज्ज्वा व्रजेदूर्ध्वं पापरज्ज्वा व्रजेदधः। द्वयं ज्ञानासिना छित्वा विदेहः शान्तिमृच्छति' इति पुराणवचनात्। प्रणाशम् अत्यन्तोच्छेदम। विदधतु कुर्वन्तु। सम्यग्ज्ञानमन्तरेण तदनुपपत्तेस्तत्संपादयन्त्वित्यर्थः। केशान् प्रत्येतत्प्रार्थनं च एषां विशेषतो भक्तानुग्रहसामर्थ्यात्; 'उवाच च सुरानेतौ मत्केशौ वसुधातले। अवतीर्य भुवो भारं क्लेशहानिं करिष्यतः' इत्यादिपुराणवचनात। 'ईशस्य केशान् विदुरम्बुवाहान्' इति वचनात् मेघपरत्वेनाप्ययं श्लोको योज्यते— सुमाकाराः पूर्वमव्यक्तरूपाः, यत्र कुत्रचिन्निलीनत्वात्। भगवति प्रसुप्ते स्वप्तुमारब्धे जगत्प्रलयायोद्यते इत्यर्थः। 'यदा जागर्ति विश्वात्मा स तदा चेष्टते जगत्। निमीलत्येतदखिलं मायाशय्यागतेऽच्युते' इति श्रीविष्णुपुराणवचनात्। 'यौ स्वप्नबोधौ तावेव भूतानां प्रलयोदयौ' इत्यादिमहाकविवचनाच्च।

विबुधैरप्यदृष्टस्वरूपाः तेषामपि हस्तिहस्तप्रमाणधारासावित्री-हतत्वात्। तत्र हेतुः— व्याप्तव्योमान्तरालाः कुतश्चिदागत्य गगनतलं व्यावृण्वानाः इत्यर्थः। तरलमणिरुचा चञ्चलया माणिक्यवद्दीप्रप्रभया तटितेत्यर्थः। 'तटित्सौदामिनी विद्युच्चञ्चला चपला अपि' इत्यभिधानात् 'न प्रभातरलं ज्योतिरुदेति वसुधातलात्' इति शाकुन्तलोक्तवत्। रञ्जिताः अरुणिताः। अत एव स्पष्टभासः लब्धपरभागतया व्यक्तनैल्याः भगवद्देहप्रभाप्रसरवत् नीलाः। दाह्यत्वेन विपक्षभूतानामगरूणां लघूनां शुष्ककाष्ठादीनां दाहको रोषः संरम्भो यस्य तस्याग्नेर्धूम्याः धूमसंघातरूपाः 'नालैर्विक्षिपताभ्रेषु धूमाग्न्यनिलमूर्तिषु' इति पुराणवचनात्। जलस्य स्वामिनः स्वायत्तवृष्टिकार्यत्वात् केशाः मेघरूपाः केशाः शिरोरुहा इत्यावृत्त्या योजनीयम्। 'यो वर्षमिव भारतम्' इत्यादिवत्। अत्र श्लेष उत्प्रेक्षा आश्लिष्टशब्दनिबन्धनपरंपरितरूपकं चालंकारः॥

अथ 'सत्यं तु शीर्षाणि सहस्रशीर्ष' इत्यादिवचनात् सत्यलोकात्मकं भगवत उत्तमाङ्गं भङ्ग्या उपासमानस्तदलंकारभूतं दीपात्मकं किरीटमुपास्ते—

**यत्र प्रत्युप्तरत्नप्रवरपरिलसद्भूरिरोचिष्प्रतान-**
**स्फूर्त्या मूर्तिर्मुरारेर्द्युमणिशतचितव्योमवद्दुर्निरीक्ष्या।**

**कुर्वत्पारेपयोधि ज्वलदकृशशिखाभास्वदौर्वाग्निशङ्कां**
**शश्वन्नः शर्म दिश्यात्कलिकलुषतमःपाटनं तत्किरीटम् ॥**

यत्र यस्मिन् । प्रत्युप्तानां विन्यस्तानां रत्नप्रवराणां पद्मरागादिरत्नश्रेष्ठानां परिलसतो भूरिणो रोचिष्प्रतानस्य प्रभापटलस्य स्फूर्त्या प्रसरेण । मुरारेः मूर्तिर्विग्रहः द्युमणिशतचितव्योमवत् सूर्याणां शतेन निबिडमाकाशमिव दुर्निरीक्ष्या निरीक्षितुमशक्या । भवतीति शेषः । अतिशयोक्तिश्चेयं यद्यर्थगर्भिणी । 'दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता । यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः' इति श्रीभागवतोक्तवत् । रत्नानां प्रभाबाहुल्यात् मूर्तेः स्निग्धत्वान्महत्त्वाच्च । पारेपयोधि समुद्रस्य तीरे 'क्षीराब्धेरुत्तरे तीरे' इति पुराणवचनात् क्षीरोदोत्तरतीरवर्तिनि शाकद्वीपे भगवतो निवासप्रसिद्धेः । 'पारेमध्ये षष्ठ्या वा' इति समासः अलुक् च । ज्वलदकृशशिखाभास्वदौर्वाग्निशङ्कां दीप्यमानाभिर्महतीभिर्ज्वालाभिः बहुलप्रभस्य बडबामुखाग्नेः शङ्कां संभावनाम् । कुर्वत् शङ्कां जनयत्; स्वप्रभापटलतरङ्गपिशङ्गीकृतदिगुत्सङ्गनभोऽङ्कणत्वात् । पारेपयोधिभूतत्वादाश्चर्यबुद्धिर्द्योत्यते । मध्येसमुद्रमेव बडबाग्निज्वलनप्रसिद्धेः । कलिकलुषतमःपाटनम्, कलिर्धर्ममिश्रं चतुर्थं युगम्, तेन जनितं

यत् कलुषं कालुष्यं रागद्वेषादिशाबल्यान्मनसोऽप्रसाद इ-त्यर्थः । तद्रूपस्य तिमिरस्य खण्डनं तेजसस्तिमिरप्रतिभटत्वात् तमस्त्वारोपः । किरीटं मकुटम् । शश्वत् शर्म नित्यसुखम् आत्मानन्दानुभवमित्यर्थः । दिश्यादिति 'दिश अतिसर्जने' इत्यस्मात् आशिषि लिङ् । अत्रातिशयोक्तिरुत्प्रेक्षा चालं-कारः ॥ ४७ ॥

इत्थं श्रीपतेः श्रीपादद्वयमारभ्य श्रीमत्केशान्तं प्रत्येकमवयवानुपास्य, इदानीमवयविनं संपूर्णं विग्रहमुपास्ते—

**भ्रान्त्वा भ्रान्त्वा यदन्तस्त्रिभुवनगुरुरप्यब्दकोटीरनेका**
**गन्तुं नान्तं समर्थो भ्रमर इव पुनर्नाभिनालीकनालात् ।**
**उन्मज्जन्नूर्जितश्रीस्त्रिभुवनमपरं निर्ममे तत्सदृक्षं**
**देहाम्भोधिः स देयान्निरवधिरमृतं दैत्यविद्वेषिणो नः ॥**

भ्रान्त्वा भ्रान्त्वा अनवस्थानेनाटित्वा, वीप्सया प्रतिप्रलयावसानं भ्रमः प्रकाश्यते । यदन्तः यस्य देहाम्भोधेरुदरे, त्रिभुवनमिति उत्तरार्धगतमत्र भ्रान्तिक्रियाकर्मत्वेन संबध्यते । त्रिभुवनगुरुः स्रष्टृत्वेन त्रैलोक्यस्य पितृवत् पूज्यः । अपिना प्रजापत्यादीनां का वार्तेति द्योत्यते । अनेकाः बह्वीः । अब्दकोटीः संवत्सराणां दश अयुतानि । असंख्येयत्वोपलक्षणं चैतत् ।

'कालाध्वनोरत्यन्तसंयोगे' इत्युभयत्र द्वितीया। अन्तमवसानं गन्तुं प्राप्तुम्, त्रिभुवनस्येत्यर्थात्, न समर्थः अशक्तः पुनः पश्चात् भ्रमर इव भृङ्ग इवेत्यनेन यथा निष्पर्यन्ते गगने स्वशक्त्यविज्ञानेन दूरं भ्रमितुमुद्यच्छमानो भ्रमरः खिन्नखिन्नः सन्नपक्षः क्षितितले विवशः पतति एवमसावपीति द्योतयति। 'नभः पतन्त्यात्मसमं पतत्रिणस्तथा समं विष्णुगतिं विपश्चितः' इति वचनात्। नाभिनालीकनालात् नाभिकमलस्य नालात् अधोदेशात्। उन्मज्जन् इत्यनेन तस्य श्रान्तिं विज्ञाय परमकारुणिकेन भगवता स्वतत्त्वज्ञानसाधनतयोपदिष्टं तपश्चिरं तप्त्वा प्राप्तं सृष्टिसामर्थ्यं प्रकाश्यते। तत्सदृक्षम्, तच्छब्देनान्तर्गतं भुवनं परामृश्यते। तेन तुल्यम्। अपरमन्यत् बहिर्वृत्ति त्रिभुवनमित्यर्थः। निर्ममे निर्मितवान्; प्रतिमानभूतेन हृदये निहितेन तेन तेनोपायेन इदमिदमधिकरणम् इदमिदंरूपम् इदमिदंनामकमिति निर्णीय स्थावरजङ्गमात्मकं जगत्ससर्जेत्यर्थः। 'इत्थं समुद्वीक्ष्य तदब्जनालनाडीभिरन्तर्जलमाविवेश। नार्वाग्गतस्तत्खरनालनाडीः स वै विचिन्वंस्तदविन्दताजः। तमस्यपारे विदुरात्मसर्गं विचिन्वतोऽभूत्स महांस्त्रिणेमिः। ततो निवृत्त्या प्रतिलब्धकामः स धिष्ण्यमासाद्य पुनः स देवः। शनैर्जितश्वासनिवृत्तचित्तो न्यषीददारूढसमाधियोगः। स्वयं तदन्तर्हृदयेऽवभातमपश्यतापश्य-

त यन्नपूर्वम्' इति, 'प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते' इति श्रीभागवतवचनात्। 'विरमति महाकल्पे नाभीपथैकनिकेतनस्त्रिभुवनपुरःशिल्पी यस्य प्रतिक्षणमात्मभूः। किमधिकरणं कीदृक्कस्य व्यवस्थितिरित्यसावुदरमविशद्द्रष्टुं तस्मै जगन्निधये नमः' इति मुरार्युक्तेश्च। देहाम्भोधिः समुद्र इव विग्रहः। उपमायाः हेतुमाह— निरवधिः परिच्छेदरहितः। 'विष्णोरिवास्यानवधारिणीयमीदृक्तया नूनमियत्तया वा' इति रघुवंशोक्तेः। अमृतम्, मृतं मृतिः तदभावः अमृतम्। 'अमृतस्य च' इति भगवद्वचनात् जननाभाव एवामृतम्। तस्य च मुक्तिमन्तरेणासंभवात् मुक्तिरित्यर्थः। 'अथ मर्त्यो मृतो भवत्यत्र ब्रह्म समश्नुते' 'एष त आत्मान्तर्याम्यमृतः' इति श्रुतेः। 'अमृतत्वाय कल्पन्ते' इति स्मृतेश्च। अम्भोधित्वारोपात् अमृतदानोपपत्तिश्च। देयादित्याशिषि लिङ्। अत्रातिशयोक्तिरुपमा चालंकारः॥ ४८॥

अथ 'समस्तशक्तिरूपाणि तत्करोति जनेश्वरः। देवतिर्यङ्मनुष्याख्याश्चेष्टापयति लीलया' इति 'एतन्नानावताराणां निधानं बीजमव्ययम्' इत्यादिवचनैः जगदनुग्रहाय भगवद्विग्रहस्यैव मत्स्याद्याकाररूपेण विवर्तमानत्वात् तानेवावतारविशेषानुपास्ते। व्यष्टिभूततदुपासनस्यापि समष्टिभूतवासुदेवो-

पासनत्वेन परिणामात्—

**मत्स्यः कूर्मो वराहो नरहरिणपतिर्वामनो जामदग्न्यः**
**काकुत्स्थःकंसघातीमनसिजविजयीयश्चकल्किर्भविष्यन्।**
**विष्णोरंशावतारा भुवनहितकरा धर्मसंस्थापनार्थाः**
**पायासुर्मां त एते गुरुतरकरुणाभारखिन्नाशया ये ॥**

मत्स्यः मीनः । कूर्मः कच्छपः । वराहः सूकरः । नरहरिणपतिः नरः पुरुषः हरिणपतिः सिंहः 'सिंहो मृगेन्द्रः पञ्चास्यः' इत्यमरः । 'भ्रूणान् हन्ति हरिणानिव हरिणेशः किशोरकम्' इति हर्षोक्तेः । नरश्चासौ हरिणपतिश्च नरहरिणपतिः नरसिंहः, कण्ठादुपरि सिंहाकारत्वादधः पुरुषाकारत्वाच्च । वामनः अदित्यां कश्यपाज्जातो मायावटुः । जामदग्न्यः जमदग्नेः भार्गवस्यापत्यं परशुरामः । काकुत्स्थः ककुत्स्थ इति प्रसिद्धः कश्चिदैक्ष्वाको राजर्षिः, तद्गोत्रभवो दाशरथी राम इत्यर्थः । कंसघाती कालनेमेरवतारमुग्रसेनसुतं कंसाख्यं हतवान् देवकीपुत्रः कृष्ण इत्यर्थः । मनसिजविजयी मनस इन्द्रियाणां च निग्रहात् कामं जितवानिति बुद्धमुनिः, 'मारजिल्लोकजिज्जिनः' इत्यभिधानात् । जिनमुनेरपि भगवदवतारेषु दशस्वन्यतमत्वेन भागवतादिप्रसिद्धेः 'लोकान्

तामिति विमोहमतिप्रलोभं वेषं विधाय बहु भाष्यत औपधर्म्यम्' इति भागवतोक्तेः । 'इत्युक्ते भगवांस्तेभ्यो मायामोहं शरीरतः । समुत्पाद्य ददौ विष्णुः प्राह चेदं वचः सुरान्' इति श्रीविष्णुपुराणवचनात् । बलभद्रस्य तु शेषावतारत्वेन प्रसिद्धेश्चेयमुक्तिः । 'मत्स्यः कूर्मो वराहश्च नारसिंहश्च वामनः । रामो रामश्च बुद्धश्च कृष्णः कल्की च ते दश' इति गणनात् । अत्रापि 'रामो रामश्च रामश्च' इति कैश्चित्पठ्यते । स तु पाठोऽनन्तस्यापि भगवन्मूर्तित्वात् तदवतारस्यापि भगवदवतारविवक्षयेति मन्तव्यम् ; कृष्णबलभद्रयोस्तुल्यकालत्वादेकस्मिन् काले अवतारद्वयस्यानुपपत्तेः अङ्गभूतानामवतारस्य च प्राधान्याङ्गीकारे लक्ष्मणाद्यवतारेष्वपि ताथाभाव इति त्रयोदशत्वप्रसङ्गात् । कल्किः भविष्यन्, कल्किः 'भविता विष्णुयशसो नाम्ना कल्किर्जगत्पतिः' इति दिव्यदृष्टिभिर्दृष्ट्वा जगत्यागामित्वेन आदिष्टः कल्किनामा यः स चेति पूर्वोक्तसमुच्चयार्थश्चकारः । इतिरध्याहार्यः । इत्यनेन प्रकारेण ये विष्णोर्वासुदेवस्य अंशावताराः— दीपस्येव दीपान्तरावताराः, अपरिलुप्तस्वसामर्थ्यस्यैव कालरूपेण जगति प्रादुर्भावात् । गुरुतरकरुणाभारखिन्नाशयाः अलघीयसा दयया भारेण दुर्वहेन अतिशयेन खिन्नः आक्रान्त आशयो हृदयं येषाम् । खिन्नत्वेन कार्येण आक्रमणं कारणं लक्ष्यते । तथात्वं कथं ज्ञायत

इत्यत्राह— भुवनहितकराः भुवनस्य स्थावरजङ्गमात्मकस्य हितं श्रेयः तस्य कराः ; न तु प्रीतिमात्रं तत्र पित्रोरिवेत्यर्थः । स्तनंधयस्येव भुवनस्य हितापरिज्ञानात् । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति ताच्छील्ये टः । तत्र हेतुः धर्मसंस्थापनार्थाः धर्मस्य वर्णाश्रमाद्यानुगुण्येन श्रुत्या कर्तव्यत्वेन चोदितस्यार्थस्य सम्यक् स्थापनं स्थिरीकरणं प्रयोजनं येषाम् । 'स्वे स्वे कर्मण्यभिरतः सिद्धिं विन्दति मानवः' इति, 'धर्मो माता पिता धर्मो धर्मो ज्ञातिस्तथा सुहृत् । धर्मः स्वर्गश्च मोक्षश्च धर्मः स्वामी परंतप' इत्यादिवचनैः यथा यथा धर्मानुष्ठानस्यैव विहितत्वात्, धर्मस्य च परिपन्थिनिरासेन स्वयमनुष्ठानेन च भगवदवतारेणैव संस्थाप्यमानत्वादिति भावः । 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगे युगे' इति, 'यदि ह्यहं न वर्तेय जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः' इत्यादिभगवद्वचनात् । दानवापहृतत्रयीप्रत्याहरणादिभिर्मात्स्यस्य, मन्दरोद्धारणादिभिः कौर्मस्य, धरणीमण्डलोद्धरणादिभिर्वाराहस्य, हिरण्यवधादिभिर्नारसिंहस्य, बलिबन्धनादिभिर्वामनस्य, दुष्टक्षत्रक्षपणादिभिर्जामदग्न्यस्य, रावणप्रमापणादिभिः काकुत्स्थस्य, पूतनापातनादिभिः कार्ष्णस्य, त्रिपुरासुरविप्रलम्भादिभिः बौद्धस्य,

कलियुगकलुषनिरसनेन कृतयुगस्थापनादिभिः काल्क्यस्य चा-वतारस्य जगद्धितकरणप्रसिद्धेश्च । ते यच्छब्देन परामृष्टाः । एते अतीतानागतत्वेऽपि भावनावशात् वर्तमानत्वेन भक्तेरनु-मीयमाना इत्यर्थः। पायासुः रक्षन्त्विति आशिषि लिङ्। अत्र स्वभावोक्तिरतिशयोक्तिर्भाविकं चालंकारः । अवतारस्वभाव-वर्णनात् कारुणिकत्वातिशयस्य भारखिन्नत्वेनाध्यवसायादती-तानागतानां प्रत्यक्षायमाणत्वाच्च ॥ ४९ ॥

अथ भक्ताभ्यवपत्तये मूर्तत्वेन विवृत्तमूर्तं सकलजगदधि-ष्ठानं सच्चिदानन्दैकरसं वस्तु भङ्ग्योपास्ते । अमूर्तानुप्रवेशा-न्मूर्तोपासनस्य; 'संधानस्य तु लक्षार्थं तस्य रूपमिदं स्मृतम्' इति, 'यथाग्निमानयेत्युक्ते ज्वलत्काष्ठादृते पृथक् । नाग्नि-रानीयते तद्वत्पूज्यो मूर्त्यात्मना शिवः' इति वायूक्तेः । 'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गति-र्दुःखं देहवद्भिरवाप्यते' इति भगवद्वचनात्। 'उपायः सोऽ-वताराय नास्ति भेदः कथंचन' इत्याचार्यवचनाच्च—

**यस्माद्वाचो निवृत्ताः सममपि मनसा लक्षणामीक्षमाणाः**
**स्वार्थालाभात्परार्थव्यपगमकथनश्लाघिनो वेदवादाः ।**
**नित्यानन्दं स्वसंविन्निरवधिविमलस्वान्तसंक्रान्तबिम्ब-**
**च्छायापत्त्यापिनित्यंसुखयतियमिनोयस्तदव्यान्महो नः॥**

वाचः वागिन्द्रियशक्तयः । निवृत्ताः पराचीनं प्रसृताः, स्वकर्मभूतवचनव्याप्यत्वाभावात् । जात्यादिद्वारा हि वाचो वक्तव्याभिव्याप्तिः । जात्यादिहीनमनुभवैकगोचरं सा कथं विषयीकुर्यात्, 'यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति श्रुतेः । निवृत्तेर्विरामार्थत्वात् यस्मादिति पञ्चमी । 'अगोचरे वागिव चोपरेमे' इति, 'इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् । तथापि न तदाख्यातुं सरस्वत्यापि शक्यते' इत्याद्याप्तवचनात् । मनसेत्यन्तःकरणोपलक्षणम्, 'यन्मनसा न मनुते येनाहुर्मनो मतम्' 'न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः' इति श्रुतिभ्यः । मनसा समं सहेति तस्यापि मूर्तिमेवानुध्यातुं सामर्थ्यादत्र च तदभावादिति भावः । मनसा संकल्पितस्यापि 'वचनलिङ्गाद्धि वक्तुरभिप्रायः' इति न्यायात् वाग्व्यापारमन्तरेण बालमूकादिविज्ञानसदृशत्वाद्वाच एव प्राधान्यमिति मनसा सममित्युक्तिः, 'सहयुक्तेऽप्रधाने' इति स्मरणात् । अनया चोक्त्या 'यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह' इति श्रुतिवाक्यमनुस्मार्यते । तर्हि 'तं त्वौपनिषदं पृच्छामि', 'वेदान्तविज्ञानसुनिश्चितार्थाः', 'सर्वे वेदा यत्पदमामनन्ति', 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादिश्रुतिस्मृतिवचनानां संगतार्थत्वं कथं नामाभूत् इत्य-

त्राह—स्वार्थालाभात् स्वं मुख्यम् अर्थं वाच्यम्, अलाभात् जात्यादिद्वारविरहात् अप्राप्य। ततो हेतोः लक्षणामीक्षमाणाः मुख्यां वृत्तिं परित्यज्य लक्षणावृत्तिमङ्गीकुर्वाणाः, 'मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे। मुख्यार्थेनाविनाभूतप्रतीतेर्लक्षणेष्यते' इति 'मुख्यार्थबाधे तद्योगे रूढितोऽर्थप्रयोजनात्। अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया' इत्यादिना आचार्यैर्लक्षिता लक्षणावृत्तिः। सा च त्रिविधा; जहत्स्वार्था अजहत्स्वार्था जहदजहत्स्वार्था चेति। तत्र तृतीया द्विधा श्रुत्या कटाक्ष्यते, 'तत्त्वमस्यादिवाक्येषु लक्षणा भागलक्षणा। सेयमित्यादिवाक्यस्थपदयोरिव नापरा' इत्याचार्यवचनात्। 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'अयमात्मा ब्रह्म' इत्यादिब्रह्मात्मपरेषु महावाक्येषु मुख्यार्थबाधमूलत्वं च तत्प्रवृत्तेर्दर्शितम्। 'प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णता। विरुध्यते यतस्तस्माल्लक्षणा संप्रवर्तते' इति, 'सोऽयं विद्वानित्यवबोधस्तव यद्वद्देशं कालं चापि विरुद्धं प्रविहाय। तद्वत्कर्तृत्वादिविरुद्धं यदिहास्तीत्युक्त्वा सर्वं तत्सदसि त्वं परिशिष्टम्' इत्यादिवचनैः महावाक्यानामियं गतिर्दर्शिता। तत्राप्यतद्व्यावृत्तिरूपेण कथमपि प्रतिपादयति, साक्षाद्विधेस्तावदगोचरत्वादित्याह—परार्थव्यपगमकथनश्लाघिनः, परस्य अन्यस्य तस्मादित्यर्थात्, अतद्भूतस्येत्यर्थः। अर्थस्य वस्तुनः स्थूलसूक्ष्म-

देहयोस्तद्धर्माणां चेत्यर्थः । व्यपगमः अविद्याध्यस्तत्वेन मिध्यात्वम् । तेन कथनं तद्द्वारेण प्रतिपादनम् , बाध्यानामधिष्ठानेनाबाध्यमानत्वात् सत्यम् , अपरिलुप्तदृक्स्वरूपत्वात् ज्ञानम् , परमप्रेमास्पदत्वादानन्दम् , अपरिच्छिन्नत्वादनन्तं च यत्परिशिष्ट तदिति भङ्गया प्रकाशनमित्यर्थः, 'अवचनेन प्रोवाच' इति श्रुतेः । श्लाघयितुमभिनन्दितुं येषाम् । वेदवादाः श्रुत्यन्तोक्तयः इत्यनेन परस्वरूपनिरूपणपराणां च तटस्थस्वरूपलक्षणप्रतिपादकानामवान्तरवाक्यानां प्रवृत्तिः प्रतिपादिता । 'यतो वा इमानि भूतानि जायन्ते' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्म' 'नेति नेत्यात्मा' 'नेह नानास्ति किंचन' 'अस्थूलमणवह्रस्वमदीर्घम्' इत्यादिवचनैः । यस्मादित्युक्तेर्यस्मिन्निति विभक्तिविपरिणामेन योजनीयम् । यस्मिन् विषये वर्तन्त इति शेषः । अथवा, निवृत्ता इति अत्रापि संबध्यते, तेषामपि फलतो निवृत्तत्वात् । पूर्वभागस्य कर्मप्रतिपादकस्य ज्ञानप्रतिपादकोत्तरभागशेषत्वात् शेषिण एव मुख्यत्वम् । अतो वेदान्तानामेव मुख्यं वेदत्वमित्यभिप्रेत्य वेदवादाः इत्युक्तिः । अतो वाङ्मनसागोचरत्वोक्तिरौपनिषदत्वाद्युक्तिश्च न विजाघटीतीति भावः । आगमोऽप्यात्मन्यध्यारोपिताविद्यानिवर्तकत्वेन ब्रह्मात्मनोरेकत्वप्रतिपत्तिं प्रति प्रमाणत्वं प्रतिपद्यत इति आचार्यवचनात । प्रमाणाढ्येयातिशयत्वं हि परप्रकाश्यत्वं तच्च ब्रह्म-

णि नास्तीति भावः। 'अतीतः पन्थानं तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि' इति भट्टाचार्यैरप्ययमर्थः प्रतिपादितः। वाङ्मनसागोचरत्वं साधितं चेत्, तर्हि प्रमाणशून्यत्वात् तुरगशृङ्गादिवन्निरुपाख्यत्वं प्रसक्तमित्यत्राह—स्वसंविदिति; स्वप्रकाशम्; अवेद्यत्वे सति अपरोक्षव्यवहारयोग्यमित्यर्थः, 'अत्रायं पुरुषः स्वयंज्योतिः' 'आत्मनैवायं ज्योतिषास्ते' इत्यादिश्रुतिभ्यः। अतः स्वानुभवसिद्धे वस्तुनि कः खल्वनुन्मत्तस्तुच्छत्वाशङ्कातङ्कपङ्कमङ्कुरयति। न हि नाहमस्मीति किंचित्प्रत्येति। सुषुप्तेऽपि 'न किंचिदवेदिषम्' इति वेद्यस्यैव निषेधो न वेदितुः 'यानुभूतिरजामेया' 'स्वानुभूत्यैकमानया' इत्याद्याचार्यवचनात्। तथा चाहुरभियुक्ताः—'यत्सिद्ध्या बहु सिध्यात् स्वानुसंधिविडम्बना। तत्कृते मीलिताक्षेभ्यो महद्भ्यः क्रियते नमः' इति। स्वयंविदिति स्वयं ज्ञानस्वरूपमित्यपि ज्ञानादिगुणत्वोक्तिनिरसनाय साधितं ज्ञेयम्, 'तद्यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति श्रुतेः। नित्यानन्दम् अनश्वरं सुखं परमप्रेमास्पदत्वात्, 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति श्रुतेः। नित्येति भङ्गुरसुखव्यावृत्तिः। अबाध्यत्वपर्यायेण नित्यत्वेन सत्यत्वमप्युक्तम्, 'सत्यम-

बाह्यं बाह्यमिवेति तद्विवेकः' इत्याचार्योक्तेः । निरवधि अवधिः परिच्छेदः देशकालवस्तुभिः, परिच्छेदरूपादवधेर्य-न्निष्क्रान्तमित्यर्थः । 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः । अनेन अनन्तमित्युक्तम् । 'सत्यं ज्ञानमनन्तं ब्रह्म', 'विज्ञानमानन्दं ब्रह्म' इति श्रुतिगतानां सत्यज्ञानानन्तानन्द-पदानामनृतजडपरिच्छिन्नदुःखव्यावृत्तिमुखेन ब्रह्मणि प्रवृत्तिः न स्वरूपभेदेनेत्यखण्डार्थता प्रकाशितेति ग्राह्यम् । तदेव जगद-नुग्रहाय दिव्यां मूर्तिमवलम्ब्य भक्तान् प्रमोदयतीत्याह—वि-मलस्वान्तसंक्रान्तबिम्बच्छायापत्त्या, मैत्र्यादिभावनावशात् भ-क्तिविद्याभ्यां च क्षालितरागद्वेषादिकलङ्के स्वान्ते मनसि दर्प-णस्थानीये संक्रान्तस्य प्रविष्टस्य बिम्बस्य धारणायान्तःस्थिरीकृ-तस्य विष्णुविग्रहस्येत्यर्थात् छाया शोभा, अथवा बिम्बस्य प्र-तिबिम्बस्य प्रकृतिभूतस्य छाया प्रतिबिम्बः 'बिम्बोऽस्त्री मण्डल-समप्रतिमासु च लक्ष्मसु । प्रतिबिम्बे तत्प्रकृतौ' इति; 'छाया-त्वनातपे कान्तौ प्रतिबिम्बार्कजाययोः' इति वैजयन्ती। तस्या आपत्त्या स्वस्य तद्भावप्राप्त्या, अथवा तदनुभूत्या, अमृतरसतृ-षितस्येव मोदकात् एतत्स्वरूपभूतानन्दकन्दलितस्य विग्रह-स्य स्वाद्यमानस्य यदा अयं प्रभावः, तदा किं ब्रूमो वयममृ-तस्यैव साक्षादनुभूयमानस्य इत्यपिना द्योत्यते । यमिनः परमयोगिनः सनकादीन् । योगाभ्यासमन्तरेण तदनुभवस्या-

प्यशक्यत्वात्। नित्यं सुखयति दुःखोदर्कसुखव्यतिरेकेण एका-न्ततोऽत्यन्तं च सुखयति तदात्वे निर्वृतिजनकत्वात् उपरि विदेहकैवल्यानन्दहेतुत्वाच्च सदा सुखितान् करोतीत्यर्थः । तन्महः 'ज्योतिषां ज्योतिः' 'आत्मनैवायं ज्योतिषास्ते' इत्यादिश्रुतेः । 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इत्यादिस्मृतेश्च। अव्यात् स्वानुभूत्या संसारदुःखेभ्यो रक्षतु इति। अत्र सूक्ष्मातिशयोक्तिरर्थापत्तिश्चालंकारः ॥ ५० ॥

एवं सकलनिष्कलाभ्यां परमेश्वरमुपास्य इदानीमित्थंभावेनोपासमानमपि यो भजते तस्यापि कृतार्थता भवति, किं पुनः स्वयमुपासमानस्येति वा, सकलोपासकस्यायं प्रभावः किं पुनर्निष्कलोपासकस्येति वा व्यञ्जयितुमुपास्यमहात्मानमुपास्ते । 'बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभः । क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' इति भगवतैव तस्य स्तुतत्वात्। 'मद्भक्तजनवात्सल्यं पूजायां चानुमोदनम्' इत्यादीनां भक्तिलक्षणत्वेन प्रकाशितत्वात् । 'त्वद्भक्तभृत्यपरिचारकभृत्यभृत्यभृत्यस्य भृत्य इति मां स्मर लोकनाथ' इति परमभागवतश्रीकुलशेखरमहाराजवचनाच्च ।

आपादादा च शीर्षाद्वपुरिदमनघं वैष्णवं यः स्वचित्ते
धत्ते नित्यं निरस्ताखिलकलिकलुषे संततान्तःप्रमोदः ।
जुह्वज्जिह्वाकृशानौ हरिचरितहविः स्तोत्रमन्त्रानुपाठै-
स्तत्पादाम्भोरुहाभ्यांसततमपिनमस्कुर्महेनिर्मलाभ्याम् ॥

आपादादिति जात्येकवचनम् 'तत्कुर्यात् गरुडसमं नरस्य चक्षुः' इत्यादिवत् । पादादारभ्य । आङभिविधौ । आशीर्षात् शीर्षात् शिरसः 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । शीर्षमवधि कृत्वेति साकल्यमुक्तम् । आङत्र मर्यादायाम् । वपुः मूर्तिः । इदं समनन्तरवर्णितम् । अनघम् अघस्य पापस्य विरुद्धम्, तदन्यतद्विरुद्धतदभावद्योतकत्वान्नञः, अधर्म इत्यादिवत् । वैष्णवं विष्णोः संबन्धि । 'तस्येदम्' इत्यण् । स्वचित्ते स्वीयत्वेन निश्चिते मनसि । निरस्ताखिलकलिकलुषे दूरतः क्षिप्तं कलिकालजनितं कलुषं कालुष्यं यस्मात् तत् । कालविशेषणं चैतत् । 'यथाग्निरुद्धतशिखः' इतिवत् । 'आयासस्मरणे कोऽन्यः स्मृतौ यच्छति शोभनम् । पापक्षयश्च भवति स्मरतां तमहर्निशम्' इति पुराणवचनात् । सन्ततान्तःप्रमोदः अविच्छिन्नहृदयाह्लादः सन्नित्यर्थः । अनेन द्रवच्चित्तप्रेमाश्रुपुलकोत्सवसंपत्त्या बहिः स्पष्टक्षोभः इति सूचितम् । धत्ते धारयतीति अनेन मानससंताप उक्तः ।

वाचिकमाह—जिह्वाकृशानौ रसनाधिदेवतारूपेऽग्नौ 'वह्नीन्द्रौ-चेन्द्रमित्रका' इति भागवतोक्तेः। हरिचरितहविः भगवतो वेदाहरणादिरूपवृत्तान्तात्मकं हव्यं पवित्रत्वात् दिव्यत्वेन स्वाद्यत्वात् उपरि महाफलप्रसोतृत्वाच्च हविष्ट्वारोपः। 'यच्छृण्वतां रसज्ञानां स्वादु स्वादु पदे पदे' इत्यादिवचनैः। स्तोत्रमन्त्रानुपाठैः वैदिकपुरुषसूक्तादिपौराणिकब्रह्मपरादिस्तुतिमन्त्रजपपुरःसरः जुह्वत् समर्पयन् सन्निति तत्कालविशेषणम्। उभाभ्यां च नान्तरीयकतया हिंसादिवर्जनभगवत्प्रणामादिरूपं शारीरं तपः सिद्धमेव। जुह्वदित्यनेन 'शब्दादीन् विषयानस्य इन्द्रियाग्निषु जुह्वति' इति, 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतप' इति, 'ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्' इति भगवद्वचनमनुसंधत्ते। अत्र वैष्णवं वपुरिति शुद्धधारणास्पदत्वम्, इदमिति वर्णितमधुरप्रकारविशिष्टत्वम्, अनघमिति पापक्षयरूपं धारणाफलम्, स्वचित्त इति 'योगश्चित्तवृत्तिनिरोधः' इति वचनात् योगस्य च यमाद्यनुष्ठानरूपत्वात् यमादिप्रत्याहारान्तपञ्चाङ्गीवशीकृतत्वं चित्तस्य, धत्त इति 'धारणान्नित्यम्' इति प्रत्ययान्तरतिरस्काराद्ध्यानम्, निरस्ताखिलेति मैत्र्यादिभावनाफलम्, सन्ततान्तःप्रमोद इति परमेश्वरैक्यानुसंधानजनितपरमानन्दानुभवरूपः समाधिश्च प्रकाश्यते। वपुर्धत्त इति सबीजसमाधित्वम् जुह्वद्धत्ते

इति सगर्भत्वानुसंधेयम्, ध्यानेन च जपेन च विशिष्टत्वात् । अस्मिंश्च पक्षे अद्य परिसमापितस्य प्रबन्धस्य अधिकारिविषयसंबन्धा अपि प्रदर्श्यन्ते । तथा हि—वपुरिदमिति भगवद्विग्रहो विषय इत्युक्तम् । सन्ततान्तःप्रमोद इति नित्यसुखापेक्षी मुमुक्षुर्मुख्याधिकारीति सूचितम् । प्रतिपाद्यप्रतिपादकभावः संबन्धः प्रसिद्धः । एवं परमप्रयोजनमनन्तरश्लोके प्रतिपादयिष्यते । तत्पादाम्भोरुहाभ्यां तस्य धर्तुश्चरणकमलाभ्याम् । सततं नमस्कुर्महे नित्यं नमस्कुर्मः । आत्मनेपदप्रयोगात् कर्त्रभिप्रायक्रियाफलत्वं सूचयति । 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति स्मरणात् । 'नमः स्वस्ति' इत्यादिना चतुर्थी । निर्मलाभ्यां निरस्तसकलपापाभ्याम् इति नमस्कारे महाफलत्वं सूचयति निष्कलङ्कमित्यादिवत् । अपि-शब्देन सकलोपासकस्य पादाम्भोरुहाभ्यामपि नमस्कुर्महे, किंपुनर्निष्कलोपासकस्येति द्योत्यते । अथवा अपि-शब्दोऽनुक्तसमुच्चयार्थः; तद्भृत्यादिपादाम्भोरुहाभ्यामपि नमस्कुर्मह इति भक्त्या अतिशयः प्रकाश्यते । अत्र पर्यायोक्तं रूपकमतिशयोक्तिश्चालंकारः ॥ ५१ ॥

इत्थं प्रारब्धं प्रबन्धं भगवत्प्रसादादविघ्नेन परिसमाप्य इदानीं परमदयामृतरससरस्वन्तः श्रीमन्तो भगवन्तः शारी-

रकमीमांसाभाष्यकाराः शंकरभगवत्पादाः स्वयं परमतपस्वितया परमेश्वरावतारभेदतया च स्तोत्रस्यास्य जप्तॄणां परमं प्रयोजनमुपस्थापयति 'ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति' 'न हीश्वरव्याहृतयः कथंचित् पुष्णन्ति लोके विपरीतमर्थम्' इत्याद्यभियुक्तोक्तेः। 'एतदाख्यानमायुष्यं पठन् रामायणं नरः। सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते' इति, 'भजत्यविकलं यद्वा वाजिमेधफलं लभेत्' इत्यादिप्राचेतसपराशरादिवचनात्—

**मोदात्पादादिकेशस्तुतिमितिरचितां कीर्तयित्वा त्रिधाम्नः**
**पादाब्जद्वन्द्वसेवासमयनतमतिर्मस्तकेनानमेद्यः।**
**उन्मुच्यैवात्मनैनोनिचयकवचकं पञ्चतामेत्य भानो-**
**र्बिम्बान्तर्गोचरं स प्रविशति परमानन्दमात्मस्वरूपम् ॥**

मोदात् भगवद्विग्रहानुभवजातात् प्रहर्षात् 'नेत्रे जलं गात्ररुहेषु कम्पः' इत्यादिविकारजनकाद्धेतोः न तु ख्यात्यादिलोभादित्यर्थः। इतिरचिताम् अनेनानन्तरोक्तेन कम्बुराजादिपरिवारावर्जनपुरःसरेण प्रकारेण ग्रथिताम्, मोदादितिरचितामित्यनेन उद्वेलस्य भक्तिसुधासिन्धोस्तरङ्गरूपेणाविर्भूतत्वं द्योत्यते। पादादिकेशस्तुतिं पादादिकेशान्तविग्रहसमग्रवर्णनपरत्वात् पादादिकेशान्तसंज्ञितं स्तोत्रम्, अन्तशब्दः प्रसि-

द्धया नोपात्तः । कीर्तयित्वा उच्चार्येति वागिन्द्रियप्रावण्यमुक्तम्, त्रिधाम्नः भगवतः । पादाब्जद्वन्द्वसेवासमयनतमतिः श्रीमदष्टाक्षरादिभिर्मन्त्रमुख्यैः या पादकमलद्वयस्य सेवा उपासनं तत्काले नता प्रवणा मतिः बुद्धिर्यस्य । अनेनान्तःकरणस्थैर्यं प्रकाशितम् । मस्तकेन शिरसा । आनमेत् । त्रिधामानं पादाब्जद्वन्द्वं वा अर्थात् प्रणमेत् पूजासाधन इत्यौचित्यात् । अनेन शरीरप्रावण्यं दर्शितम् । मनोवाक्कायानां समप्रह्वीभावे परमेश्वरस्य सर्वथा करुणाकटाक्षः पतिष्यतीति भावः । कीर्तयित्वेत्यवीप्सया सकृदुच्चारणस्यायं प्रभावः । क्रियासमभिहारस्य तु कथं कथ्यतामिति व्यञ्जयति । आनमेदिति संभावनायां लिङ् । मनुष्याणां सहस्रेषु हि स पुण्यात्मा संभवतीति द्योतयति । आत्मनेति विभक्तिप्रतिरूपकमव्ययम् । 'आत्मानमात्मना वेत्सि' इत्यादिवत् । स्वयमित्यर्थः । अनेन स्वरूपपरित्राणे तस्य परमनिरपेक्षत्वमुक्तम् । एनोनिचयकवचकं बहुजन्मसमार्जितपापपुण्यरूपं कञ्चुकम्, सर्वत आवारकत्वात् मलिनत्वात् पारतन्त्र्यकरणत्वाच्च कवचत्वारोपः । कुत्सायां कप् । उन्मुच्य सर्पस्त्वचमिवावधूयेत्यनेन दारिद्र्यव्याधिशत्रुपीडाद्यनर्थानामेनोनिचयकार्यत्वात् तस्य च निवृत्तत्वात् समग्रसंपदारोग्यरिपुजयाद्यैहिकसुखानुभूत्या दीर्घस्यायुषः प्रतिपत्तिः तत्त्वज्ञानप्राप्तिश्च

प्रकाशिता। पञ्चतां पञ्चभूतसमष्टिरूपत्वाच्छरीरस्य तत्परिग्रहस्य च कर्मफलभोगाद्यर्थत्वात् भोगेन प्रारब्धे कर्मणि क्षीणे तच्छरीरं पुनः प्रकृतिभूतभूतपञ्चके लीयते इति पञ्चता मृतिः। 'वियति वियन्मरुति मरुद्वह्नौ वह्निर्जलं जले भुवि भूः। लीयन्ते स्वप्रकृतावहमपि मय्येव' इत्याद्यभियुक्तोक्तेः। तां पञ्चताम् एत्य इति 'लशुनं गृञ्जनं चैव भुक्त्वा चान्द्रायणं चरेत्' इत्यत्र यथा प्रमादात् भुक्तं चेत् तदानीमियन्निष्कृतिरित्यनुवादोऽर्थः, न पुनरवश्यं कृत्वा पश्चाच्चान्द्रायणं चरेदिति 'स्नात्वा भुञ्जीत' इत्यादिवद्विधिः। अतश्च मार्कण्डेयादिवत् परमेश्वरोपासकानामाप्रलयमवस्थितेः 'प्रभुरहमन्यनृणां न वैष्णवानाम्' इति वचनात् न प्राकृतवत् पारतन्त्र्येण मृतिः। अपि तु संसारवैराग्यात् परानुग्रहादिना वा 'कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्' इत्युक्तत्वात् शरभङ्गदधीचादिवत् स्वेच्छोत्क्रमणादिभिः शरीरं त्यजन्ति चेत्यर्थः। भानोः सूर्यस्य बिम्बान्तर्गोचरं मण्डलान्तर्वर्ति। परमानन्दं सर्वस्मादुत्कृष्टं सुखम्, इतःपरस्य सुखस्याभावात्। मानुषमानन्दमुपक्रम्य तारतम्येनानन्तराण्यनुक्रम्य ब्रह्मानन्दे तारतम्याश्रयत्वस्यौपाधिकत्वे घटाकाशत्वस्येवातात्त्विकत्वं स्यात् आत्मस्वरूपं भानोर्बिम्बान्तर्गोचरं परमानन्दं प्रविशति उपाधिविधूननेन तदेव भवतीत्यर्थः। 'स यश्चायं पुरुषे।

यश्चासावादित्ये । स एकः ' इति श्रुतेः । ' भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ' इति, ' ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ' इति च भगवद्वचनात् । ' संदृश्यते वाप्यथ गम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ' इति, ' विभेदजनके ज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ' इति च श्रीविष्णुपुराणवचनात् । परमानन्दं विशतीत्यनेन पूर्वश्लोकप्रतिपादितस्य सबीजसमाधेः फलभूतं निर्बीजसमाधिं प्राप्य तत्फलं कैवल्यं लभत इत्यपि दर्शितम् । अत्र परिसंख्या रूपकं चालंकारः । अस्य च प्रबन्धस्य धारणाधारभगवद्विग्रहपरत्वाधारयानुध्यानपरत्वात् समाधेश्च विदेहकैवल्यपरमानन्दप्रयोजनत्वादैहिकसुखानां च ' तस्यान्तरायो मैत्रेय ब्रह्मेन्द्रत्वादिकं फलम् ' ' तस्मिन् प्रपन्ने किमिहास्त्यलभ्यं धर्मार्थकामैरलमल्पकास्ते ' इत्यादिवचनैरानुषङ्गिकत्वेनावर्जनीयत्वादैहिकसुखानुभूतिरात्मलाभश्च प्रयोजनमिति बुभुक्षुभिर्मुमुक्षुभिश्च श्रोतव्यत्वं पाठ्यत्वं जप्यत्वमनुसंधेयत्वं चेति सिद्धम् । कीर्तयित्वा नमेद्यः इत्यविशेषोक्तश्चतुर्णां वर्णानां यस्य भक्तिः स चात्राधिकारीति सूचितम् । ' मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् । न मे

प्रियश्चतुर्वेदी मद्भक्तः श्वपचोऽपि यः । तस्मै यस्मै ततो ग्राह्यः स च पूज्यो यथा ह्यहम्' इति स्मृतिवचनैः ॥ इत्यशेष-मतिमङ्गलम् ॥

इत्थं पादादिकेशस्य भगवत्पादनिर्मितेः ।
भक्तिमन्दाकिनीं व्याख्यां चक्रे पूर्णसरस्वती ॥

मृद्वङ्घ्रिश्लिष्टजङ्घं विकटकटितटं निम्ननाभिस्थपद्मं
सत्कुक्षिव्यूढवक्षः पृथुलभुजमुरुस्कन्धमुद्दामकण्ठम् ।
बिम्बोष्ठं सुष्ठुगण्डं सितरदमरुणापाङ्गमुत्तुङ्गघोणं
शोणाक्षं सुभ्रु चोत्थालिकलुठदलकं पातु विष्णोर्वपुर्वः ॥

भक्तिर्विष्णुपदाम्बुजप्रणयिनी वाणी सुधावर्षिणी
निर्धूतप्रतिहस्तिमुक्तिविरतौ यस्य प्रतीक्ष्यं मतम् ।
व्याख्यानं वटमूलनस्य महसस्तस्यापि विस्मापनं
तं वन्दे यतिसिंहमागमफलक्षेमंकरं शंकरम् ॥

इति श्रीपूर्णसरस्वत्याः कृतिः श्रीमत्पादादिकेशव्याख्या
भक्तिमन्दाकिनी नाम संपूर्णा ॥